Tait. 2. 2. 1. अथैनदपियन्त्यन्ततः Maitri. 6. 11 (एतद्)
2. 8. 1. ये कर्मणा देवानपियन्ति
Muṇḍ. 1. 2. 7. जरामृत्युं ते पुनरेवापियन्ति
2. 1. 1. प्रजायन्ते तत्र चैवापियन्ति
Nṛip. 2. 4. यमप्येति भुवनं साम्पराये
Nár. 4. सर्वमायुरप्येति

## अपीति

Máṇḍú. 11. मितेरपीतेर्वा Nṛisut. 2.
— अपीतिश्च भवति य एवं वेद Nṛisut. 2.

## अपुंस्

Śiras. 1. पुमानपुमान् स्त्रियश्चाहम्

## अपुत्र, °त्रिन्

Bṛih. 6. 3. 12. एतं नापुत्राय . . ब्रूयात्
Swet. 6. 22. नापुत्रायाशिष्याय वा पुनः (दातव्यं)
Maitri. 6. 29. एतद्गुह्यतमं नापुत्राय नाशिष्याय . . कीर्त्तयेत्
Kaṭhaśru. 1. यद्यपुत्रो भवति
Rámap. 83. अपुत्रिणां पुत्रदं च

## अपुनरावर्त्तन

Nyása. 3. सन्न्यस्याग्निमपुनरावर्त्तनम्

## अपुनरावृत्ति

Gitá. 5. 17. गच्छन्त्यपुनरावृत्तिम्

## अपुष्प

Práṇág. 1. अपुष्पा याश्च पुष्पिणीः

## अपूप

Chhá. 3. 1. 1. अन्तरिक्षमपूपः

## अपूर्व

Bṛih. 2. 5. 19. अपूर्वमनपरमनन्तरमबाह्यम्
Gauḍa. 1. 26. अपूर्वो ऽनन्तरो ऽबाह्यः
Gauḍa. 2. 8. अपूर्वं स्थानिधर्मो हि

## अपृथक्

Gauḍa. 2. 34 न पृथङ्नापृथक्किञ्चित् (MSS. न पृथक्त्वात्पृ°)
Parama. 3. न पृथङ्नापृथक्

## अपृथग्धर्मिन्

Maitri. 6. 22. तत्र ते ऽपृथग्धर्मिणो ऽपृथग्विवेक्याः

## अपृथग्भाव

Gauḍa. 2. 30. एतैरेषो ऽपृथग्भावैः

## अपृथग्विवेक्य

Maitri. 6. 22. तत्र ते ऽपृथग्धर्मिणो ऽपृथग्विवेक्याः

## अपे

Chhá. 6. 4. 1. अपागादग्नेरग्नित्वम्
2. अपागादादित्यादादित्यत्वम्
3. अपागाच्चन्द्राच्चन्द्रत्वम्
4. अपागाद्विद्युतो विद्युत्त्वम्

## अपेक्ष्

Nṛip. 1. 4. यदि दातुमपेक्षते पुत्राय शुश्रूषवे दास्यति
7. य इह स्थातुमपेक्षते

## अपेक्षा

Gauḍa. 4. 18. यस्य सिद्धिरपेक्षया

## अपैशुन

Gitá. 16. 2. त्यागः शान्तिरपैशुनम्

## अपोह्

Chhá. 5. 24. 1. यथाङ्गारानपोह्य भस्मनि जुहुयात्तादृक् तत्स्यात्

## अपोहन

Gitá. 15. 15. मत्तः स्मृतिर्ज्ञानमपोहनं च

## अपौर्णमास

Mund. 1. 2. 3. यस्याग्निहोत्रं . . अपौर्णमासम्

## अपौल्कस

Brih. 4. 3. 22. पौल्कसो ऽपौल्कसः

## अप्तोर्याम

Nrip. 5. 8. सो ऽप्तोर्यामेण यजते

## अप्यय

Katha. 6. 11. योगो हि प्रभवाप्ययौ
Mându. 6. प्रभवाप्ययौ हि भूतानाम् Nrip. 4. 1; Nrisut. 1; Râmot. 3.

## अप्रकाश

Gitâ. 14. 13. अप्रकाशो ऽप्रवृत्तिश्च

## अप्रच्युत

Gauda. 2. 38. तत्त्वादप्रच्युतो भवेत्

## अप्रजायमान

Brih. 6. 1. 12. यथा क्लीबा अप्रजायमाना रेतसा

## अप्रज्ञ

Mându. 7. न प्रज्ञं नाप्रज्ञम् Nrip. 4. 1; Nrisut. 1; Râmot. 3.

## अप्रतिगृह्य

Brih. 4. 1. 3. अप्रतिगृह्यस्य प्रतिगृह्णाति

## अप्रतिमप्रभाव

Gitâ. 11. 43. लोकत्रये ऽप्यप्रतिमप्रभाव

## अप्रतिरूप

Kaush. 4. 11. प्रतिरूपो हैवास्य प्रजायामाजायते नाप्रतिरूपः
Brih. 1. 3. 2. यदेवेदमप्रतिरूपं वदति ( similarly in 3—6.)
2. 1. 8. प्रतिरूपं हैवैनमुपगच्छति नाप्रतिरूपम्

## अप्रतिष्ठ

Gitâ. 6. 38. अप्रतिष्ठो महाबाहो
16. 8. असत्यमप्रतिष्ठम्

## अप्रतिष्ठित

Chhâ. 1. 8. 6. अप्रतिष्ठितं वै किल ते दाल्भ्य साम

## अप्रतीकार

Gitâ. 1. 46. यदि मामप्रतीकारम्

## अप्रदाय

Gitâ 3. 12. तैर्दत्तानप्रदायैभ्यो यो भुंक्ते

## अप्रदाह

Mahânâr. 15. 9. शिवो माविशाप्रदाहाय (five times).

## अप्रबुद्ध

Maitri. 2. 6. ता अश्मेवाप्रबुद्धा अप्राणाः
Tejo. 11. अचिन्त्यमप्रबुद्धं च

## अप्रमत्त

Chhâ. 1. 3. 12. कामं ध्यायन्नप्रमत्तः
2. 22. 2. एतानि मनसा ध्यायन्नप्रमत्तः स्तुवीत
Katha. 6. 11. अप्रमत्तस्तदा भवति
Swet. 2. 9. मनो धारयेताप्रमत्तः
Mund. 2. 2. 4. अप्रमत्तेन वेद्धव्यम् Dhyâna. 19.
Mukti. 1. 52. यमेवैष त्रिधाः श्रुतमप्रमत्तम्

## अप्रमाण

Sarvop. 4. प्रमाणाप्रमाणसाधारणा

## अप्रमेय

Brih. 4. 4. 20. एकधैवानुद्रष्टव्यमेतदप्रमेयम्
Maitri. 5. 1. अचिन्त्यायाप्रमेयाय
7. 1. अप्रमेयो ऽनाद्यन्तः
Brahmab. 9. अप्रमेयमनाद्यं च

Gîtâ. 2. 18. अनाशिनो ऽप्रमेयस्य
11. 17. दीप्तानलार्कद्युतिमप्रमेयम्
42. तत्क्षामये त्वामहमप्रमेयम्

## अप्रयत्न

Jâbâla. 6. अनिकेतवास्यप्रयत्नः

## अप्रवर्त्तिन्

Chhâ. 3. 12. 9. तदेतत्पूर्णमप्रवर्त्ति
— पूर्णमप्रवर्त्तिनीं श्रियं लभते य एवं वेद

Bṛih. 2. 1. 5. पूर्णमप्रवर्त्तीति . . एतमुपासे

## अप्रवृत्त

Gauḍa. 4. 30. निवृत्तस्याप्रवृत्तस्य

## 1. अप्रवृत्ति

Kaush. 4. 8. पूर्णमप्रवृत्ति ब्रह्मेति वा अहमेतमुपासे

## 2. अप्रवृत्ति

Gîtâ. 14. 13. अप्रकाशो ऽप्रवृत्तिश्च

## अप्रशान्त

Swet. 6. 22. नाप्रशान्ताय दातव्यम्

## अप्रसाह

Chhâ. 5. 2. 8. वाचंयमो ऽप्रसाहः

## अप्रसिद्ध

Gauḍa. 4. 17. अप्रसिद्धः कथं हेतुः

## अप्रसिद्धत्व

Gauḍa. 4. 38. उत्पादस्याप्रसिद्धत्वात्

## अप्राण

Bṛih. 3. 8. 8. अतेजस्कमप्राणम्
Maitri. 2. 4. अप्राणो निरात्मा 6. 28; 7. 4.
6. ता अहमेवाप्रबुद्धा अप्राणाः
6. 19. अप्राणादिह यस्मात् सम्भूतः प्राणसंज्ञको जीवः

Muṇḍ. 2. 1. 2. अप्राणो ह्यमनाः शुभ्रः
Nṛisut. 7. अशरीरो निरिन्द्रियो ऽप्राणः (ter).

## अप्राणत्

Kaush. 2. 14. अप्राणच्चक्षुष्कं . . शिष्ये
Chhâ. 1. 3. 3. अप्राणन्ननपानन् 4, 5.
Bṛih. 4. 1. 3. अप्राणतो हि किं स्यात्

## अप्राणयितव्य

Nṛisut. 9. अप्राणयितव्यमनपानयितव्यम्

## अप्राणाख्य

Maitri. 6. 26. असावप्राणाख्यः प्राणसंस्पर्शेनोज्ज्वलति

## अप्राप्त

Sarvop. 2. अप्राप्तशरीरसंयोगम्

## अप्राप्य

Chhâ. 8. 9. 1. इन्द्रो ऽप्राप्यैव देवान्
8. 10. 1. सहाप्राप्यैव देवान् 8. 11. 1.
Tait. 2. 4. 1. यतो वाचो निवर्त्तन्ते अप्राप्य 2. 9. 1; Brahma. 3.
Gîtâ. 6. 37. अप्राप्य योगसंसिद्धिम्
9. 3. अप्राप्य मां निवर्त्तन्ते
16. 20. मामप्राप्यैव कौन्तेय

## अप्रिय

Kaush. 1. 4. तस्य प्रिया ज्ञातयः सुकृतमुपयन्त्यप्रिया दुष्कृतम्
Bṛih. 1. 4. 10. एकस्मिन्नेव पशावादीयमाने ऽप्रियं भवति
Tait. 3. 10. 4. पर्येणं म्रियन्ते द्विषन्तः सपत्नाः परि ये ऽप्रिया भ्रातृव्याः
Gîtâ. 5. 20. नोद्विजेत्प्राप्य चाप्रियम्

## अप्रियवेत्तृ

Chhâ. 8. 10. 2. अप्रियवेत्तेव भवति 4.

## अप्रोच्य

Chhâ. 4. 10. 2. तस्मै हाप्रोच्यैव प्रवासाञ्चक्रे

## अप्सरस्, अप्सरा

Kaush. 1. 3. अम्बाश्चाम्बायवीश्चाप्सरसः
4. तं पञ्चशतान्यप्सरसां प्रतियन्ति

Maitri. 6. 31. अप्सरसो भानवीयाश्च मरीचयः

Mahânâr. 16. 6. अप्सरासु च या मेधा

Nṛip. 1. 2. यक्षगन्धर्वाप्सरोगणैः

## अप्सुचारिन्

Maitri. 6. 26. अप्सुचारिणः . . सूत्रयन्त्रेणोद्धृत्य

## अप्सुमन्त्

Chhâ. 2. 4. 2. न हाप्सु प्रैत्यप्सुमान् भवति

## अफल

Prâṇâg. 1. याः फलिनीर्या अफलाः

## अफलप्रेप्सु

Gîtâ. 18. 23. अफलप्रेप्सुना कर्म

## अफलाकांक्षिन्

Gîtâ. 17. 11. अफलाकांक्षिभिः . . इज्यते
17. अफलाकांक्षिभिर्युक्तैः

## अबल

Chhâ. 4. 4. 5. कृशानामबलानां चतुःशता गा निराकृत्य

## अबलिमन्

Chhâ. 8. 6. 4. अबलिमानं नीतो भवति

## अबलीयंस्

Bṛih. 1. 4. 14. अबलीयान् बलीयांसमाशंसते धर्मेण

## अबल्य

Bṛih. 4. 4. 1. स यत्रायमात्माबल्यं न्येत्य

## अबाह्य

Bṛih. 2. 5. 19. अनन्तरमबाह्यम् 3. 8. 8.
4. 5. 13. अनन्तरो ऽबाह्यः (bis);
Gauḍa. 1. 26.

## अबाह्यस्वरूप

Nṛisut. 9. अत एव शुद्धो ऽबाह्यस्वरूपः

## अबिभ्रत्

Mahânâr. 2. 9. अविभ्रदग्ने आगहि

## अबुद्ध, अबुद्धि

Gauḍa. 3. 8. तथा भवत्यबुद्धानाम्

Gîtâ. 7. 24. मन्यन्ते मामबुद्धयः

## अबुद्धिपूर्व

Maitri. 2. 5. अबुद्धिपूर्वमिहैवावर्त्तते ऽंशेनेति सुप्तस्येवाबुद्धिपूर्वं विबोधः

## अबुध्

Bṛih. 4. 4. 11. अविद्वांसो ऽबुधो जनाः

## अबोद्धव्य

Nṛisut. 9. अमन्तव्यमबोद्धव्यम्

## अबोद्धृ

Chhâ. 7. 9. 1. अबोद्धाकर्त्ताविज्ञाता

## अब्ज

Râmap. 86. पृथिव्यब्जे स्वासनाधः प्रकल्प्य
92. गदारिशंखाब्जधरम्

## अब्जकाण्ड

Krish. 25. अब्जकाण्डं जगद्बीजम्

## अब्जा

Katha. 5. 2. अब्जा गोजा ऋतजा: Mahânâr. 9. 3; 17. 8; Nrip. 3. 1.

## अब्धि

Râmap. 43. ततस्ततार हनुमानब्धिम्

## अब्रह्मन्

Siras. 1. ब्रह्माब्रह्माहम्

## अब्रह्मवादिन्

Nrip. 2. 4. मुमुक्षवो ऽब्रह्मवादिनश्च (so Nârâyaṇa and Sankara; but they give ब्रह्मवादिनश्च as a variant).

## अब्रह्मविद्

Muṇḍ. 3. 2. 9. नास्याब्रह्मवित्कुले भवति Mânḍûkya. 10.

## अब्राह्मण

Chhâ. 4. 4. 5. नैतदब्राह्मणो विवक्तुमर्हति

## अभक्त

Gîtâ. 18. 67. इदं ते नातपस्काय नाभक्ताय कदाचन

## अभद्र

Nṛisut. 6. भद्रमभद्रं ..बुबुधिरे

## अभय

Chhâ. 1. 4. 4. एतदक्षरमेतदमृतमभयं तत् प्रविश्य देवा अभया अभवन्
5. एतदेवाक्षरं स्वरममृतमभयं प्रविशति
4. 15. 1. एतदमृतमभयमेतद्ब्रह्म 8. 3. 4; 8. 7. 4; 8. 8. 3; 8.10. 1; 8. 11.1; Maitri. 2. 2; Nṛisut. 8 (4 times).

Bṛih. 4. 2. 4. अभयं वै जनक प्राप्तो ऽसि —अभयं त्वागच्छताद्यो नो भगवन्नभयं वेदयसे
4. 3. 21. अपहतपाप्माभयं रूपम्
4. 4. 25. एष महानज आत्मा ..अभयो ब्रह्म —अभयं वै ब्रह्माभयं हि वै ब्रह्म भवति य एवं वेद Nṛisut. 8 (4 times).

Tait. 2. 7. 1. यदा ह्येवैष एतस्मिन्नदृश्ये ..अभयं प्रतिष्ठां विन्दते —अथ सो ऽभयं गतो भवति

Kaṭha. 2. 11. अभयस्य पारम्
3. 2. अभयं तितीर्षतां पारम्

Maitri. 6. 8. सर्वभूतेभ्यो ऽभयं दत्त्वा
23. शान्तमशब्दमभयम् 7. 3.
7. 9. इन्द्रस्याभयाय

Mahânâr. 20. 2. अभयं कृणुहि विश्वतो नः
4. यत इन्द्र भयामहे ततो नो अभयं कृधि

Praśna. 1. 10. एतदमृतमभयमेतत्परायणम्
5. 7. शान्तमजरममृतमभयम्

Gauḍa. 3. 37. समाधिरचलो ऽभयः
39. अभये भयदर्शिनः
40. मनसो निग्रहायत्तमभयम्
4. 78. अभयं पदमश्नुते

Nṛisut. 1. एकमजरममृतमभयम्
2. अजरममरममृतमभयम्

Prâṇâg. 1. ईशानो अभयं कृणोतु
2. अभयं सर्वभूतेभ्यः Aruṇeya. 4.

Atmapra. 1. द्वैताद्द्वैतमभयं भवति

Gîtâ. 10. 4. भयं चाभयमेव च
16. 1. अभयं सत्त्वसंशुद्धिः
18. 30. कार्याकार्ये भयाभये

## अभयङ्कर

Mahânâr. 20. 5. सोमपा अभयंकरः

## अभयत्व

Nṛisut. 7. अभयत्वादशोकत्वात्

## अभात

Nṛisut. 6. अभातमद्वैतमचिन्त्यम्

## अभाव

Śwet. 6. 4. तेषामभावे कृतकर्मनाशः
Gauḍa. 2. 3. अभावश्च रथादीनाम्
Nâda. 18. अनौपम्यमभावं च
Brahmab. 7. भावो नाभाव इष्यते
Sarvop. 1. शब्दाद्यभावे ऽपि
—विषयविशेषविज्ञानाभावात्
2. अवस्थात्रयाभावात्
Vâsu. 3. यो गोपीचन्दनाभावे
Skanda. 6. तुषाभावे न तण्डुलः
Gitâ. 2. 16. नाभावो विद्यते सतः
10. 4. सुखं दुःखं भावो ऽभावः

## अभावयत्

Gîtâ. 2. 66. न चाभावयतः शान्तिः

## अभिकाम

Chhâ. 8. 1. 5. यं यमन्तमभिकामा भवन्ति
8. 2. 10. यं यमन्तमभिकामो भवति

## अभिकाश्

Bṛih. 4. 3. 11. असुप्तः सुप्तानभिचाकशीति
Śwet. 3. 5. तया नस्तनुवा . . अभिचाकशीहि
4. 6. अनश्नन्नन्यो अभिचाकशीति Muṇḍ. 3. 1. 1.
Nîla. 8. तया नस्तन्वा . . अभिचाकशत्

## अभिकॢप्

Kaṭha. 6. 9. हृदा मनीषा मनसाभिकॢप्तः Śwet. 3. 13; 4. 17, 20 (2 MSS.); Mahânâr. 1. 11.

## अभिक्रम्

Bṛih. 6. 4. 6. मलोद्वाससं यशस्विनीमभिक्रम्योपमन्त्रयेत

## अभिक्रम

Gitá. 2. 40. नेहाभिक्रमनाशो ऽस्ति

## अभिक्षर्

Bṛih. 4. 1. 2. सर्वाण्येनं भूतान्यभिक्षरन्ति 3-7.

## अभिगम्

Bṛih. 4. 4. 11. तांस्ते प्रेत्याभिगच्छन्ति Îśâ. 3.
Muṇḍ. 1. 2. 12. गुरुमेवाभिगच्छेत्
Nṛip. 1. 1. यत् पुरुषो मनसाभिगच्छति

## अभिगा

Chhâ. 8. 14. 1. श्वेतं लिन्दु माभिगाम्

## अभिगामिन्

Aśrama. 1. ऋतुकालाभिगामी

## अभिगै

Chhâ. 1. 5. 2. एतमु एवाहमभ्यगासिषम् 4.
4. प्राणांस्त्वं भूमानमभिगायतात्
2. 24. 3. वासवं सामाभिगायति
7. रौद्रं सामाभिगायति
11. वैश्वदेवं सामाभिगायति

## अभिग्रह्

Maitri. 6. 12. अन्नमभिजिघृक्षमाणानि

## अभिघ्रा

Kaush. 2. 11. पुत्रस्य मूर्धानमभिजिघ्रेत्
— पुत्र ते नाम्ना मूर्धानमभिजिघ्रामीति त्रिरस्य मूर्धानमभिजिघ्रेत्

## अभिचिन्त्

Amṛita. 19. शब्दमेवाभिचिन्तयेत्

## अभिजन्

Chhâ. 7. 12. 1. आकाशमभिजायते

Maṇḍ. 1. 1. 8. ततो ऽन्नमभिजायते

Amṛita. 38. न स भूयो ऽभिजायते Gîtâ. 13. 23.

Yogaśi. 1. गात्रकम्पो ऽभिजायते

Piṇḍa. 5. मतिस्तस्याभिजायते

Gîtâ. 2. 62. कामात्क्रोधो ऽभिजायते

6. 41. योगभ्रष्टो ऽभिजायते

16. 3. सम्पदं दैवीमभिजातस्य

4. अभिजातस्य . . सम्पदमासुरीम्

5. सम्पदं दैवीमभिजातो ऽसि पाण्डव

## अभिजनवन्त्

Gîtâ. 16. 15. आढ्यो ऽभिजनवानस्मि

## अभिजि

Maitri. 6. 36. यमराज्यमभिष्टोमेनाभिजयति (॰यजति in MS.)

Mahânâr. 20. 9. छन्दोभिरिमांल्लोकाननपजय्यमभ्यजयन्

25. 1. सूर्याचन्द्रमसोर्महिमानौ ब्राह्मणो विद्वानभिजयति

Praśna. 1. 9. चान्द्रमसमेव लोकमभिजयन्ते

10. आदित्यमभिजयन्ते

Nyâsa. 1. सर्वमभिजित्य सर्वश्रियं दधतु (one MS. has सर्वमभिजन्युः)

## अभिज्ञा

Gîtâ. 4. 14. इति मां यो ऽभिजानाति

7. 13. मोहितं नाभिजानाति माम्

25. मूढो ऽयं नाभिजानाति लोकः

9. 24. न तु मामभिजानन्ति

18. 55. भक्त्या मामभिजानाति

## अभितःसर

Nîla. 25. गर्द्दभावभितःसरौ (MSS. अभितस्करौ).

## अभितप्

Ait. 1. 4. तमभ्यतपत्तस्याभितप्तस्य &c.

3. 2. सो ऽपो ऽभ्यतपत्ताभ्यो ऽभितप्ताभ्यो मूर्त्तिरजायत

Chhâ. 2. 23. 3. प्रजापतिर्लोकानभ्यतपत्

4. 17. 1. —तेभ्यो ऽभितप्तेभ्यस्त्रयी विद्या संप्रास्रवत्

— तामभ्यतपत्तस्या अभितप्तायाः &c.

4. तान्यभ्यतपत्तेभ्यो ऽभितप्तेभ्य ओंकारः &c.

3. 1. 3. एतमृग्वेदमभ्यतपन्

— तस्याभितप्तस्य यशस्तेज इन्द्रियं वीर्यमन्नाद्यं रसो ऽजायत 3. 2. 2; 3. 3. 2; 3. 4. 2; 3. 5. 2.

3. 2. 2. एतं यजुर्वेदमभ्यतपन्

3. 3. 2. एतं सामवेदमभ्यतपन्

3. 4. 2. एतदितिहासपुराणमभ्यतपन्

3. 5. 2. एतद्ब्रह्माभ्यतपन्

4. 17. 2. एतास्तिस्रो देवता अभ्यतपत्

3. एतां त्रयीं विद्यामभ्यतपत्

7. 11. 1. वायुमागृह्याकाशमभितपति

## अभितस्

Chhâ. 3. 1. 4. तदादित्यमभितो ऽश्रयत् 3. 2. 3; 3. 3. 3; 3. 4. 3; 3. 5. 3.

8. 6. 4. तमभित आसीनाः

Bṛih. 1. 1. 2. एतौ वा अश्वं महिमानाव-
भितः सम्बभूवतुः

Nîla. 9. ये चेमे अभितो रुद्राः

Râmap. 62. लिख्य मन्त्र्यभितो गिरम्

Gîtâ. 5. 26. अभितो ब्रह्मनिर्वाणम्

## अभिदास्

Chhâ. 1. 2. 8. यश्चैनमभिदासति

## अभिदृश्

Chhâ. 4. 3. 6. तं . . नाभिपश्यन्ति मर्त्याः

## अभिद्रु

Kena. 17. तदभ्यद्रवत् 21, 24.

Bṛih. 1. 3. 2. तमभिद्रुत्य पाप्मनाविध्यन्
3-6.
7. तमभिद्रुत्य पाप्मनाविध्य-
त्सन्

## 1. अभिधा

Maitri. 4. 3. एष स्वधर्मो ऽभिहितो यो
वेदेषु
6. 25. सर्वभावपरित्यागो योग
इत्यभिधीयते
37. तत् त्रेधाभिहितमग्ना आदि-
त्ये प्राणे 7. 11.
7. 10. यद्वेदेष्वभिहितं तत् सत्यम्

Praśna. 3. 1. कथं बाह्यमभिधत्ते कथम-
ध्यात्मम्

Brahma. 1. स जाग्रदभिधीयते

Sarvop. 3. ज्ञानमित्यभिधीयते

Haṁsa. 2. तदा तुर्यातीतमुन्मननमज-
पोपसंहारमित्याभिधीयते

Râmap. 6. परं ब्रह्माभिधीयते

Mukti. 1. 22. सैव सालोक्यसारूप्यमु-
क्तिरित्यभिधीयते
2. 16. मुक्तमित्यभिधीयते

Gîtâ. 2. 39. एषा ते ऽभिहिता सांख्ये
13. 1. क्षेत्रमित्यभिधीयते
17. 27. सदित्येवाभिधीयते
18. 11. स त्यागीत्यभिधीयते
68. मद्भक्तेष्वभिधास्यति

## 2. अभिधा

Gauḍa. 4. 60. शाश्वताशाश्वताभिधा

## अभिधान

Mukti. 2. 34. चित्तनाशाभिधानम्

## अभिधाव्

Kaush. 1. 3. तं ब्रह्माहाभिधावत मम
यशसा

## अभिधी (?)

Maitri. 7. 9. अतो नैनामभिधीयेत

## अभिध्यातृ

Maitri. 6. 22. असा अभिध्याता . . स्वा-
तन्त्र्यं लभते
7. 11. अभिध्यातुर्विस्तृतिरिवैतत्

## अभिध्यान

Śwet. 1. 10. तस्याभिध्यानाद्योजनात्
11. तस्याभिध्यानात्तृतीयम्

Maitri. 7. 9. वेदादिशास्त्रहिंसकधर्माभि-
ध्यानमस्तु

## अभिध्यै

Kaush. 2. 3. यदेकधनमभिध्यायात्

Kaṭha. 1. 28. अभिध्यायन् वर्णरतिप्रमो-
दान्
2. 3. कामानभिध्यायन्नचिकेतो
ऽत्यस्राक्षीः

Maitri. 1. 1. आत्मानमभिध्यायेत्
— कः सो ऽभिध्येयो ऽयं यः
प्राणाख्यः
2. 6. सो त्मानमभिध्यात्वा
4. 5. एके ऽन्यमभिध्यायन्त्येके
ऽन्यम्
6. ता अभिध्यायेदर्चयेन्निह्नु-
याच्च

Maitri. 6. 9. आत्मन्नेवाभिध्यायति
— द्वाभ्यामात्मानमभिध्यायेत्
22. द्वे वाव ब्रह्मणी अभिध्येये
34. तस्मादग्निः . . अभिध्यातव्यः ( bis ).
— तत्सवितुर्वरेण्यं भर्गो ऽस्याभिध्येयम्
38. काममभिध्यायमानः

Praśna. 5. 1. स यः. . प्रायणान्तमोङ्कारमभिध्यायीत
3. स यद्येकमात्रमभिध्यायीत
5. ओमित्येतेनैवाक्षरेण परं पुरुषमभिध्यायीत

## अभिनद्धाक्ष

Chhâ. 6. 14. 1. पुरुषं गन्धारेभ्यो ऽभिनद्धाक्षमानीय
— अभिनद्धाक्ष आनीतो ऽभिनद्धाक्षो विसृष्टः

## अभिनन्द्

Muṇḍ. 1. 2. 7. एतच्छ्रेयो ये ऽभिनन्दन्ति मूढाः

Gitâ. 2. 57. नाभिनन्दति न द्वेष्टि

## अभिनन्द

Chhâ. 5. 8. 1. अभिनन्दा विस्फुलिंगाः
Bṛih. 6. 2. 13.

## अभिनहन

Chhâ. 6. 14. 2. तस्य यथाभिनहनं प्रमुच्य

## अभिनिःसृ

Chhâ. 8. 6. 6. तासां मूर्धानमभिनिःसृतैका
Kaṭha. 6. 16.

## अभिनिधा

Bṛih. 6. 4. 25. अस्य दक्षिणं कर्णमभिनिधाय

## अभिनिपद्

Kaush. 2. 15. एत्य पुत्र उपरिष्टादभिनिपद्यते

## अभिनिवृत्

Sarvop. 1. सो ऽभिमानो ययाभिनिवर्त्तते सा विद्या

## अभिनिवेश

Gauḍa. 4. 75. अभूताभिनिवेशः
79. अभूताभिनिवेशात्

## अभिनिष्पत्ति

Gauḍa. 4. 74. परतन्त्राभिनिष्पत्त्या

## अभिनिष्पद्

Chhâ. 8. 3. 4. स्वेन रूपेणाभिनिष्पद्यते
8. 12. 3; Maitri. 2. 2.
8. 4. 2. नक्तमहरेवाभिनिष्पद्यते
8. 12. 2. स्वेन रूपेणाभिनिष्पद्यन्ते

Bṛih. 6. 2. 16. अथेममेवाकाशमभिनिष्पद्यन्ते

## अभिनु

Siras. 4. अभि त्वा शूर नोनुमः

## अभिन्न

Nṛisut. 9. सर्वज्ञो ऽनन्तो ऽभिन्नः

## अभिन्नरूप

Nṛisut. 5. तस्मादयमनल्पो ऽभिन्नरूपः

## अभिपद्

Kaush. 4. 19. तं ह पाणावभिपद्य प्रवव्राज

Bṛih. 3. 1. 3. सर्वं मृत्युनाभिपन्नम्
4. सर्वमहोरात्राभ्यामभिपन्नम्
5. सर्वं पूर्वपक्षापरपक्षाभ्यामभिपन्नम्
6. 4. 20. अथैनामभिपद्यते

## अभिप्रज्ञा

Ait. 2. 5. आवाभ्यामभिप्रजानीहि

## अभिप्रतन्

Kaush. 4. 19. हिता नाम पुरुषस्य नाड्यो हृदयात्पुरीततमभिप्रतन्वन्ति

## अभिप्रतारिन्

Chhâ. 4. 3. 5. अभिप्रतारिणं च काक्षसेनिम्
6. अभिप्रतारिन् !

## अभिप्रवृत्

Kaush. 2. 13. यदि ह वा एवंविद्वांसमुभौ पर्वतावभिप्रवर्तेयाताम्
Gîtâ. 4. 20. कर्मण्यभिप्रवृत्तो ऽपि

## अभिप्रव्रज्

Kaush. 2. 3. वाचंयमो ऽभिप्रव्रज्य, 4.
Chhâ. 8. 7. 2. इन्द्रो हैव देवानामभिप्रवव्राज

## अभिप्रस्था

Chhâ. 4. 4. 5. ता अभिप्रस्थापयन्नुवाच
4. 6. 1. स ह श्वोभूते गा अभिप्रस्थापयाञ्चकार 4. 7. 1; 4. 8. 1.
Bṛih. 2. 1. 19. पुरीततमभिप्रतिष्ठन्ते

## अभिप्रहन्

Bṛih. 4. 3. 11. स्वप्नेन शारीरमभिप्रहत्य

## अभिप्राण्

Ait. 3. 4. अभिप्राण्य हैवान्नमत्रप्स्यत्
11. यदि प्राणेनाभिप्राणितं.. को ऽहम्
Bṛih. 6. 4. 10. अभिप्राण्यापान्यात्
11. अपान्याभिप्राण्यात्

## अभिप्रातर्

Bṛih. 6. 4. 19. अभिप्रातरेव स्थालीपाकावृताज्यं चेष्टित्वा

## अभिप्राप्

Chhâ. 5. 10. 3. नैते संवत्सरमभिप्राप्नुवन्ति

## अभिप्रास्

Chhâ. 6. 13. 2. अभिप्रास्यैनदथ मोपसीदथाः

## अभिप्रे

Kaush. 1. 4. ब्रह्म विद्वान् ब्रह्माभिप्रैति — ब्रह्म विद्वान् ब्रह्मैवाभिप्रैति

## अभिप्रेक्ष्

Aśrama. 3. यां दिशमभिप्रेक्षन्ते

## अभिभव

Gîtâ. 1. 41. अधर्माभिभवात्कृष्ण

## 1. अभिभू

Kaush. 4. 20. तावदेनमसुरा अभिबभूवुः
Chhâ. 1. 2. 1. अनेनैनानभिभविष्याम इति
4. 6. 1. ता यत्राभि सायं बभूवुः 4. 7. 1; 4. 8. 1.
Tait. 3. 10. 6. अहं विश्वं भुवनमभ्यभवाम् Nṛip. 2. 4.
Maitri. 2. 6. उपांशुरन्तर्याममभिभवति
3. 1. कर्मफलैरभिभूयमानः 2. .
— द्वंद्वैरभिभूयमानः 2.
2. अभिभूतः प्राकृतैर्गुणैः
— कृतस्यानुफलैरभिभूयमानः
3. यथाग्निनायस्पिण्डो वाभिभूतः
— भूतात्मान्तःपुरुषेणाभिभूतः
— यथायस्पिण्डे हन्यमाने नाग्निरभिभूयत्येवं नाभिभूयत्यसौ पुरुषो ऽभिभूयत्ययं भूतात्मा
5. एतैः परिपूर्ण एतैरभिभूतः
4. 4. यैः परिपूर्णो ऽभिभूतः
6. 27. अयस्पिण्डं यथाग्न्ययस्कारादयो नाभिभवन्ति

Praśna. 4. 6. स यदा तेजसाभिभूतो भवति

Gitâ. 1. 40. अधर्मो ऽभिभवत्युत

14. 10. रजस्तमश्चाभिभूय

## 2. अभिभू

Mahânâr. 15. 1. सर्वमसि सर्वायुरभिभूः

## अभिभूतत्व

Maitri. 3. 2. अभिभूतत्वात् सम्मूढत्वं प्रयातः

## अभिमथ्

Chhâ. 2. 12. 1. अभिमन्थति स हिंकारः

Bṛih. 1. 4. 6. अथेत्यभ्यमन्थत्

Swet. 2. 6. अग्निर्यत्राभिमथ्यते

## अभिमन्

Bṛih. 1. 2. 5. यदि वा इममभिमंस्ये

Muṇḍ.1. 2. 9. वयं कृतार्था इत्यभिमन्यन्ति बालाः

Sarvop. 1. अनात्मनो देहादीनात्मत्वेनाभिमन्यते

## अभिमन्तृ

Nṛisut. 9. अभिमन्ता जीवः

## अभिमन्त्र्

Bṛih. 6. 4. 6. यद्युदक आत्मानं परिपश्येत्तदभिमन्त्रयेत

28. अथास्य मातरमभिमन्त्रयते

Mahânâr. 4. 5. तेन या ब्रह्मदत्तासि काश्यपेनाभिमन्त्रिता

Kâlâg. 1. अग्निरिति भस्मेत्यनेन चाभिमन्त्र्य

Vâsu. 2. त्रिवारमभिमन्त्र्य

## अभिमान

Maitri. 2. 5. *vide* लिङ्ग ; 5. 2.

6. 10. अध्यवसायसंकल्पाभिमानाः

30. *vide* लिङ्ग

Prásna. 2. 4. सो ऽभिमानादूर्ध्वमुत्क्रामत इव

Sarvop. 1. सो ऽभिमान आत्मनो बन्धः —तमभिमानं कारयति या साविद्या

—सो ऽभिमानो ययाभिनिवर्त्तते सा विद्या

Gîtâ. 16. 4. दम्भो दर्पो ऽभिमानश्च

## अभिमानाध्यक्ष

Maitri. 6. 28. अभिमानाध्यक्षः क्रोधज्यं . . धनुर्गृहीत्वा

## अभिमानित्व

Maitri. 3. 2. अभिमानित्वं प्रयातः

6. 30.

## अभिमुख

Kaush. 2. 15. अभिमुखायैव सम्प्रदध्यात्

Râmap. 21. अभिमुखो भवेत्

Gîtâ. 11. 28. समुद्रमेवाभिमुखा द्रवन्ति

## अभिमृश्

Kaush. 2. 10. संवेशयन् जायायै हृदयमभिमृशेत्

Bṛih. 6. 3. 4. अथैनमभिमृशति

6. 4. 5. तदभिमृशेदनु वा मन्त्रयेत

9. उपस्थमस्या अभिमृश्य

Maitri. 1. 2. शिरसास्य चरणावभिमृशमानः

Śiras. 4. सर्वाणि चाङ्गान्यभिमृशति ( one MS. has अभिस्पृशति ).

## अभिया

Brahma. 1. देवदत्तः स्वप्ने आनन्दमभियाति

## अभिरक्ष्

Chhâ. 4. 17. 10. कुरूनश्वाभिरक्षति
— सर्वांश्चर्त्विजो ऽभिरक्षति

Śiras. 6. तत्प्राणो अभिरक्षति शिर:

Gîtâ. 1. 10. बलं भीष्माभिरक्षितम्
— बलं भीमाभिरक्षितम्
11. भीष्ममेवाभिरक्षन्तु

## अभिरम्

Gîtâ. 18. 45. स्वे स्वे कर्मण्यभिरत:

## अभिराम

Râmap. 3. अभिरामेण वपुषा

## अभिलाषिन्

Maitri. 6. 30. सद्ब्रह्मणि सत्यभिलाषिणि

## अभिवच्

Kaush. 1. 6. तदेतच्छ्लोकेनाभ्युक्तम्

Bṛih. 4. 4. 23. तदेतदृचाभ्युक्तम् Muṇḍ. 3. 2. 10; Praśna. 1. 7; Nṛip. 4. 2; 5. 2, 10; Mukti. 1. 51; 2. 77.

Tait. 2. 1. 1. तदेषाभ्युक्ता Nṛip. 1. 1.

## अभिवद्

Kena. 4. येन वागभ्युद्यते
17. तमभ्यवदत् को ऽसीति 21.

Chhâ. 4. 1. 2. हंसो हंसमभ्युवाद
8. तं हाभ्युवाद त्वं नु भगव: सयुग्वा रैक्व इति
4. 2. 1. तं हाभ्युवाद रैक्वेमानि षट् शतानि गवाम्
4. तं हाभ्युवाद रैक्वेदं सहस्रं गवाम्
4. 5. 1. एनमृषभो ऽभ्युवाद
4. 6. 2. तमग्निरभ्युवाद
4. 7. 2. तं हंस उपनिपत्याभ्युवाद
4. 8. 2. तं मद्गुरुपनिपत्याभ्युवाद

Chhâ. 4. 9. 1. तमाचार्यो ऽभ्युवाद 4. 14. 1.
4. 14. 2. इति हाग्नीनभ्यूदे

Bṛih. 2. 4. 14. इतर इतरमभिवदति 4. 5. 15.
— केन कमभिवदेत् 4. 5. 15.
3. 2. 3. वाचा हि नामान्यभिवदति
3. 8. 8. तदक्षरं . . ब्राह्मणा अभिवदन्ति
6. 2. 1. तमुदीक्ष्याभ्युवाद

Kaṭha. 1. 10. त्वत्प्रसृष्टं माभिवदेत्प्रतीत:

Muṇḍ. 1. 2. 6. प्रियां वाचमभिवदन्त्य:

Praśna. 2. 2. ते प्रकाश्याभिवदन्ति
4. 2. न स्पृशते नाभिवदते
6. 1. यो ऽनृतमभिवदति

## अभिवन्दन

Brahma. 3. तस्मात् सन्ध्याभिवन्दनम्

## अभिवादिन्

Maitri. 4. 5. भगवन्नभिवाद्यसीत्यभिवाद्यसीति

## अभिविज्वल्

Gîtâ. 11. 28. विशन्ति वक्त्राण्यभिविज्वलन्ति

## अभिविमान

Chhâ. 5. 18. 1. प्रादेशमात्रमभिविमानमात्मानम्

## अभिविसृज्

Kaush. 3. 4. वागेवास्मिन् सर्वाणि नामान्यभिविसृज्यन्ते
—प्राण एवास्मिन् सर्वे गन्धा अभिविसृज्यन्ते
—चक्षुरेवास्मिन् सर्वाणि रूपाण्यभिविसृज्यन्ते
—श्रोत्रमेवास्मिन् सर्वे शब्दा अभिविसृज्यन्ते

Kaush. 3. 4. मन एवास्मिन्सर्वाणि ध्या-नान्यभिविसृज्यन्ते (In each of the above, some MSS. read अ-स्मात् for अस्मिन्).

## अभिवीक्ष्

Ait. 3. 12. स जातो भूतान्यभिव्यैक्षत्

## अभिवृ

Katha. 2. 2. श्रेयो हि धीरो ऽभि प्रेयो वृणीते

## अभिवृष्

Prasna. 2. 10. यदा त्वमभिवर्षस्यथेमाः प्राण ते प्रजा आनन्दरूपाः

## अभिव्यक्तिकर

Swet. 2. 11. ब्रह्मण्यभिव्यक्तिकराणि

## अभिव्यादा

Brih. 1. 2. 4. तं जातमभिव्याददात्

## अभिव्याप्

Gopî. 5. अभिव्याप्यायतो भूत्वा (2 MSS. read अप्सरोभिर्वृतो भूत्वा).

## अभिव्याहार

Chhâ. 8. 12. 4. अभिव्याहाराय वाक्

## अभिव्याहृ

Ait. 3. 3. अभिव्याहृत्य हैवान्नमत्रप्स्यत्

11. यदि वाचाभिव्याहृतम्

Kaush. 1. 6. एतया वाचाभिव्याह्रियते सत्यम्

Chhâ. 1. 3. 3. अप्राणन्ननपानन्वाचमभिव्याहरति

4. अप्राणन्ननपानन्नृचमभिव्याहरति

Chhâ. 8. 12. 4. यो वेदेदमभिव्याहराणीति स आत्मा

## अभिव्रज्

Śiras. 4. उदञ्चः प्राञ्चो ऽभिव्रजन्त्येके

## अभिषिच्

Maitri. 6. 12. अन्नेनाभिषिक्ताः पचन्तीमे प्राणाः

Nṛip. 1. 3. सावित्रस्याष्टाक्षरं पदं श्रियाभिषिक्तं .. वेद श्रिया हैवाभिषिच्यते 4. 2.

## अभिष्टु

Chhâ. 1. 3. 9. यां देवतामभिष्टोष्यन् स्यात्

11. यां दिशमभिष्टोष्यन् स्यात्

Maitri. 6. 38. तद्ब्रह्माभिष्टूयमानम्

## अभिष्वङ्ग

Maitri. 3. 5. इष्टेष्वभिष्वङ्गः

## अभिष्वङ्गिन्

Maitri. 7. 10. तदिमे मूढा उपजीवन्त्यभिष्वङ्गिणः

## अभिसंवाञ्छ्

Kena. 31. अभि हैनं सर्वाणि भूतानि संवाञ्छन्ति

## अभिसंविश्

Chhâ. 1. 11. 5. सर्वाणि ह वा इमानि भूतानि प्राणमेवाभिसंविशन्ति

3. 6. 2. त एतदेव रूपमभिसंविशन्ति 3. 7. 2; 3. 8. 2; 3. 9. 2; 3. 10. 2.

3. स एतदेव रूपमभिसंविशति 3. 7. 3; 3. 8. 3; 3. 9. 3; 3. 10. 3.

Bṛih. 1. 3. 18. माभिसंविशतेति
— एनं स्वा अभिसंविशन्ति
Tait. 3. 1. 1. यत्प्रयन्त्यभिसंविशन्ति
3. 2. 1. अन्नं प्रयन्त्यभिसंविशन्ति
3. 3. 1. प्राणं प्रयन्त्यभिसंविशन्ति
3. 4. 1. मनः प्रयन्त्यभिसंविशन्ति
3. 5. 1. विज्ञानं प्रयन्त्यभिसंविशन्ति
3. 6. 1. आनन्दं प्रयन्त्यभिसंविशन्ति
Nṛip. 1. 1. अनुष्टुभं प्रयन्त्यभिसंविशन्ति
3 1. आकाशं प्रयन्त्यभिसंविशन्ति

## अभिसंवृति

Gauḍa. 4. 73. परतन्त्राभिसंवृत्या

## अभिसंस्था

Chhâ. 1. 8. 5. स्वर्गं वयं लोकं सामाभिसंस्थापयामः
7. प्रतिष्ठां वयं लोकं सामाभिसंस्थापयामः

## अभिसन्धा

Gopî. 5. धूममार्गविस्तृतं हि वेदार्थमभिसन्धाय
— अर्चिर्मार्गविस्तृतं वेदार्थमभिसन्धाय
Gîtâ. 17. 12. अभिसन्धाय तु फलम्

## अभिसमावृत्

Chhâ. 8. 15. 1. अभिसमावृत्य कुटुंबे .. स्वाध्यायमधीयानः

## अभिसमि

Chhâ. 4. 1. 4. एनं सर्वं तदभिसमेति
4. 15. 2. एतं हि सर्वाणि वामान्यभिसंयन्ति

## अभिसमे

Chhâ. 5. 1. 12. तं हाभिसमेत्योचुः
Bṛih. 3. 1. 1. ब्राह्मणा अभिसमेताः
4. 3. 38. यथा राजानं प्रयियासन्तं .. अभिसमायन्त्येवमात्मानं .. अभिसमायन्ति
4. 4. 1. एनमेते प्राणा अभिसमायन्ति
Maitri. 4. 1. अतिविस्मिता अभिसमेत्योचुः

## अभिसम्पद्

Chhâ. 8. 15. 1. ब्रह्मलोकमभिसम्पद्यते
Bṛih. 4. 3. 8. शरीरमभिसम्पद्यमानः
33. ये कर्मणा देवत्वमभिसम्पद्यन्ते
4. 4. 5. यत्कर्म कुरुते तदभिसंपद्यते
6. 1. 4. श्रोत्रे ह्येमे सर्वे वेदा अभिसम्पन्नाः
Praśna. 5. 3. तूर्णमेव जगत्यामभिसम्पद्यते

## अभिसंप्रपद्

Śwet. 5. 11. देही .. रूपाण्यभिसंप्रपद्यते

## अभिसंभू

Kaush. 2. 14. प्राणमेव प्रज्ञात्मानमभिसंभूय (bis)
Chhâ. 3. 14. 4. एतमितः प्रेत्याभिसंभवितास्मि
4. 15. 5. अर्चिषमेवाभिसंभवन्ति 5. 10. 1.
5. 10. 3. धूममभिसंभवन्ति
Bṛih. 6. 2. 16.
8. 13. 1. ब्रह्मलोकमभिसंभवामि
Bṛih. 6. 2. 15. ते र्चिरभिसंभवन्ति
Mahânâr. 2. 7. आत्मनात्मानमभिसंबभूव

## अभिसिध्

Chhâ. 7. 4. 3. स लोकान् .. अभिसिध्यति
7. 5. 3; 7. 7. 2; 7. 9. 2; 7. 11. 2; 7. 12. 2;

## अभिसृज्

Ait. 3. 3. तदेतदभिसृष्टं नदत् . . अत्यजिघांसत्
Bṛih. 6. 4. 2. तेनैनामभ्यसृजत्

## अभिहन्

Maitri. 1. 3. °रोगशोकाद्यैरभिहते ऽस्मिञ्छरीरे
Gîtâ. 1. 13. सहसैवाभ्यहन्यन्त

## अभिहिंकृ

Kaush. 2. 11. गवां त्वा हिंकारेणाभिहिंकरोमीति त्रिरस्य मूर्धानमभिहिंकुर्यात्

## अभिहु

Maitri. 6. 9. प्राणाय स्वाहा . . इति पञ्चभिरभिजुहोति

## अभिहृ

Bṛih. 4. 1. 6. मनसा वै स्त्रियमभिहार्यते
5. 3. 1. अभिहरन्त्यस्मै स्वाश्चान्ये च य एवं वेद

## अभी

Mukti. 2. 39. शमनो नाशमभ्येति

## अभीक्ष्ण

Kena. 30. अनेन चैतदुपस्मरत्यभीक्ष्णं संकल्पः

## अभीद्ध

Mahânâr. 5. 5. ऋतं च सत्यं चाभीद्धात्तपसो ऽध्यजायत

## अभीष्

Râmot. 4. वृणीष्व यदभीष्टम्

## अभीषण

Nṛisut. 6. भीषणमभीषणं . . बुबुधिरे

## अभूत

Gauḍa 4. 3. अभूतस्यापरे धीराः
4. अभूतं नैव जायते
26. अभूतो हि यतश्चार्थः
38. न च भूतादभूतस्य संभवो ऽस्ति
75. अभूताभिनिवेशः
79. अभूताभिनिवेशात्

## अभूततस्

Gauḍa. 3. 23. भूततो ऽभूततो वापि

## अभूति

Bṛih. 1. 4. 10. तस्य ह न देवाश्चनाभूत्या ईशते

## अभेद

Gauḍa. 3. 13. अभेदेन प्रशस्यते
Skanda. 11. अभेददर्शनं ज्ञानम्

## अभोज्य

Mahânâr. 14. 2. यदुच्छिष्टमभोज्यम्
Prâṇâg. 1.

## अभ्यधिक

Śwet. 6. 8. न तत्समश्चाभ्यधिकश्च दृश्यते
Gîtâ. 11. 43. न त्वत्समो ऽस्त्यभ्यधिकः कुतो ऽन्यः

## अभ्यनुवच्

Chhâ. 3. 12. 5. तदेतदृचाभ्यनूक्तम्

## अभ्यनुशास्

Chhâ. 5. 11. 3. हन्ताहमन्यमभ्यनुशासानीति

## 1. अभ्यन्तर adj.

Muṇḍ. 2. 1. 2. स बाह्याभ्यन्तरः
Praśna. 5. 6. क्रियासु बाह्याभ्यन्तरमध्यमासु

Dhyâna. 9. स बाह्याभ्यन्तरे स्थितः

## 2. अभ्यन्तर

Maitri. 2. 6. अभ्यन्तरं विविशामि . . अभ्यन्तरं प्राविशत्

Garbha. 3. अर्द्धमासाभ्यन्तरे पिण्डम् — मासाभ्यन्तरे कठिनम्

## अभ्यपान्

Ait. 3. 11. यद्यपानेनाभ्यपानितं . . को ऽहम्

## अभ्यर्च्

Kaush. 2. 6. श्रैष्ठ्यायाभ्यर्च्यन्ते (one MS. has °र्च्चन्ते)

Râmap. 90. त्रिमलादींश्च शक्तीरभ्यर्चयेत्

Gitâ. 18. 46. स्वकर्मणा तमभ्यर्च्य

## अभ्यवदान्य

Bṛih. 6. 2. 7. मा नो भवान् बहोरनन्तस्यापर्यन्तस्याभ्यवदान्यो ऽभूत्

## अभ्यस्

Maitri. 6. 23. मूर्द्ध्नि स्थाने ततो ऽभ्यसेत्

Garbha. 4. तत् सांख्यं योगमभ्यसेत् (3 MSS. have अभ्यसे).

Brahmab. 18. ग्रन्थमभ्यस्य मेधावी

Amṛita. 1. अभ्यस्य च पुनः पुनः

28. नित्यमभ्यस्यतः क्रमात्

Haṁsa. 2. दशममेवाभ्यसेत्

Vâsu. 3. पूर्वमभ्यस्य पुण्ड्रस्थं हृत्पद्मस्थं ततो ऽभ्यसेत्

Mukti. 2. 11. नाभ्यस्तं च पुनः पुनः

14. जन्मान्तरशताभ्यस्ता

25. दृढाभ्यस्तपदार्थैकभावनात्

## अभ्यसन

Gitâ. 17. 15. स्वाध्यायाभ्यसनं चैव

## अभ्यसूय

Gitâ. 3. 32. ये त्वेतदभ्यसूयन्तः

18. 67. न च मां यो ऽभ्यसूयति

## अभ्यसूयक

Gitâ. 16. 18. प्रद्विषन्तो ऽभ्यसूयकाः

## अभ्याख्या

Tait. 1. 11. 4. अथाभ्याख्यातेषु

## अभ्यागम्

Kâush. 1. 1. तं हाभ्यागतं पप्रच्छ

Chhâ. 5. 11. 2. तं हन्ताभ्यागच्छामेति तं हाभ्याजग्मुः 4.

## अभ्यादा

Chhâ. 3. 14. 2. सर्वमिदमभ्यात्तः 4.

## अभ्याधा

Chhâ. 6. 7. 3. महतो ऽभ्याहितस्य 5.

Bṛih. 2. 4. 10. यथार्द्रैधाग्नेरभ्याहितात्

4. 5. 11. यथार्द्रैधाग्नेरभ्याहितस्य Maitri. 6. 32.

5. 11. 1. यं प्रेतमग्नावभ्यादधति

5. 14. 8. यदि ह वा अपि बह्विवाग्नावभ्यादधति

## अभ्यारोह

Bṛih. 1. 3. 28. अथातः पवमानानामेवाभ्यारोहः

## अभ्याश

Chhâ. 1. 3. 12. अभ्याशो ह यदस्मै स कामः समृध्येत यत्कामः स्तुवीत

2. 1. 4. अभ्याशो ह यदेनं साधवो धर्मा आ च गच्छेयुः

3. 19. 4. अभ्याशो ह यदेनं साधवो घोषा आ च गच्छेयुः

Chhâ. 5. 10. 7. अभ्याशो ह यत्ते रमणीयां योनिमापद्येरन्
— अभ्याशो ह यत्ते कपूयां योनिमापद्येरन्

## अभ्यास

Śwet. 1. 14. ध्याननिर्मथनाभ्यासात् Brahma. 3; Dhyâna. 20.
Kaivalya. 11. ज्ञाननिर्मथनाभ्यासात्
Nyâsa. 4. तदभ्यासेन प्राणापानौ संयम्य
5. तदभ्यासेन लभ्येत पूर्वजन्मार्जितात्मना
Mukti. 2. 8. द्रागभ्यासवशाद्याति
— तदाभ्यासस्य साफल्यम्
40. एकतत्त्वदृढाभ्यासात्
53. ध्यानाभ्यासप्रकर्षत:
Gîtâ. 6. 35. अभ्यासेन तु कौन्तेय
12. 10. अभ्यासे ऽप्यसमर्थो ऽसि
12. श्रेयो हि ज्ञानमभ्यासात्
18. 36. अभ्यासाद्रमते यत्र

## अभ्यासयोग

Kshur. 14. चतुरभ्यासयोगेन
Gîtâ. 8. 8. अभ्यासयोगयुक्तेन
12. 9. अभ्यासयोगेन तत:

## अभ्याहन्

Chhâ. 6. 11. 1. वृक्षस्य यो मूले ऽभ्याहन्यात्..मध्ये ऽभ्याहन्यात्..अग्रे ऽभ्याहन्यात्

## अभ्युक्ष्

Bṛih. 6. 4. 19. तेनैनां त्रिरभ्युक्षति
23. सोष्यन्तीमद्भिरभ्युक्षति

## अभ्युच्चर्

Maitri. 6. 26. प्राणादयो वै पुनरेव तस्माद्भ्युच्चरन्तीह 31.
Maitri. 6. 35. ये विन्दव इवाभ्युच्चरन्त्यजस्रम्

## अभ्युत्थान

Gîtâ. 4. 7. अभ्युत्थानमधर्मस्य

## अभ्युदय

Mukti. 2. 39. मनसो ऽभ्युदयो नाश: (MSS. अभ्युदये).

## अभ्युदि

Nyâsa. 1. यद्ब्रह्माभ्युदय दिवं च लोकम् (अभ्युदय अभ्यजयत् Nâr.)
Mukti. 2. 51. प्राणो यावन्नाभ्युदितो हृदि

## अभ्युद्धा

Chhâ. 1. 11. 5. सर्वाणि ह वा इमानि भूतानि प्राणमेवाभिसंविशन्ति प्राणमभ्युज्जिहते

## अभ्यैर्

Mahânâr. 2. 5. तृतीये धामान्यभ्यैरयन्त

## अभ्र

Chhâ. 2. 15. 1. अभ्राणि संप्लवन्ते स हिंकार:
5. 5. 1. अभ्रं धूम:
5. 10. 5. धूमो भूत्वाभ्रं भवति
6. अभ्रं भूत्वा मेघो भवति
8. 12. 2. अभ्रं विद्युत्स्तनयित्नु:
Bṛih. 6. 2. 10. अभ्राणि धूम:

## अभ्रार्चिस्

Maitri. 6. 35. विद्युदिवाभ्रार्चिष: परमे व्योमन्

## अभ्रूणहन्

Bṛih. 4. 3. 22. भ्रूणहा ऽभ्रूणहा

## अम्

Prâṇâg. 1. अमा शिष्यान्तो ऽसि

## अम

Chhâ. 1. 6. 1. इयमेव सा ऽग्निरमस्तत्साम
2. अन्तरिक्षमेव सा वायुरमस्तत्साम (similarly in 3, 4, 6.)
1. 7. 1. वागेव सा प्राणो ऽमस्तत्साम
2. ...आत्मामः
3. ...मनो ऽमः
4. यन्नीलं परः कृष्णं तदमः
5. 2. 6. अमो नामासि

Bṛih. 1. 3. 22. वाग्वै सामैष सा चामश्चेति तत्साम्नः सामत्वम्
6. 4. 20. अमो ऽहमस्मि सा त्वं सा त्वमस्यमो ऽहम्

## अमत

Kena. 11. यस्यामतं तस्य मतम्
Chhâ. 6. 1. 3. अमतं मतं (भवति)
6. 4. 5. न नो ऽद्य कश्चनाश्रुतममतमविज्ञातमुदाहरिष्यति
Bṛih. 3. 7. 23. अमतो मन्ता
3. 8. 11. अमतं मन्तृ

## अमत्वा

Chhâ. 7. 18. 1. नामत्वा विजानाति

## अमनस्

Chhâ. 5. 1. 11. यथा बाला अमनसः
Bṛih. 3. 8. 8. अवागमनः
4. 1. 6. अमनसो हि किं स्यात्
Maṇḍ. 2. 1. 2. अप्राणो ह्यमनाः शुभ्रः

## अमनस्क

Kaṭha. 3. 7. अमनस्कः सदाशुचिः
Brahma. 2. स्वयममनस्कमश्रोत्रम्

## अमनस्ता

Gauḍa. 3. 32. अमनस्तां तदा याति
Mukti. 2. 30. अमनस्ता तदोदेति

## अमनीभाव

Maitri. 6. 34. यदा यात्यमनीभावम्
Gauḍa. 3. 31. मनसो ह्यमनीभावे द्वैतं नैवोपलभ्यते

## अमन्तव्य

Nṛisut. 9. अमन्तव्यमबोद्धव्यम्

## अमन्तृ

Chhâ. 7. 9. 1. अद्रष्टाश्रोतामन्ता..भवति
Maitri. 6. 11. अमन्ताश्रोतास्प्रष्टा..भवति

## अमन्त्रवत्

Aruṇeya. 2. अत ऊर्ध्वममंत्रवदाचरेत्

## 1. अमर

Bṛih. 4. 4. 25. अजरो ऽमरो ऽमृतः
Nṛisut. 2. अजरममरममृतमभयम्
Nyâsa. 4. अजरममरमक्षरमव्ययम्
Mukti. 2. 75. अजो ऽमरश्चैव तथाजरो ऽमृतः

## 2. अमर (=उ)

Râmap. 75. अमरविभूषिता

## अमरत्व

Nṛisut. 7. अजत्वादमरत्वात्

## अमर्ष

Gîtâ. 12. 15. हर्षामर्षभयोद्वेगैः

## अमल

Haṁsa. 2. दिव्यचक्षुस्तथामलम्
Râmap. 94. ये ते पठन्त्यमला यान्ति मोक्षम्
Mukti. 2. 69. गृहाणामलवासनाः
Gîtâ. 14. 14. लोकानमलान्प्रतिपद्यते

## अमलक

Chhâ. 7. 3. 1. यथा वै द्वे वामलके

## अमलवर्चस्

Kshur. 18. *vide.* अनलवर्चस्

## अमहत्

Nrisut. 6. महान्तममहान्तं . . बुबुधिरे

## अमा

Chhâ. 5. 2. 6. अमो नामास्यमा हि ते सर्व-मिदम्

Brih. 1. 5. 20. अमैवास्तां तद्भवति

Prâṇâg. 1. प्राणे जुहोम्यमा शिष्यान्तो ऽसि ( all the MSS. have जुहोम्यामा ).

## अमातृ

Brih. 4. 3. 22. माता ऽमाता

## अमात्र

Brih. 3. 8. 8. अमुखममात्रम्

Mâṇḍû. 12. अमात्रश्चतुर्थो ऽव्यवहार्यः Nrisut. 2.

Gauḍa 1. 23. नामात्रे विद्यते गतिः
29. अमात्रो ऽनन्तमात्रश्च

## अमात्रा

Nrisut. 2. मात्रामात्राः प्रतिमात्राः कुर्यात् (मात्राश्च ता अमात्राश्च मात्रामात्राः Sankarânanda. )

## अमानव

Chhâ. 4. 15. 5. तत् पुरुषो ऽमानवः 5. 10. 2.

## अमानित्व

Gîtâ. 13. 7. अमानित्वमदम्भित्वम्

## अमाय

Nrisut. 9. अमायमप्यौपनिषदमेव

## अमावास्या

Kaush. 2. 3. पौर्णमास्यां वामावास्यायां वा

Kaush. 2. 8. मासि मास्यमावास्यायां वृत्तायाम्

Chhâ. 5. 2. 4. अमावास्यायां दीक्षित्वा

Brih. 1. 5. 14. अमावास्यां रात्रिम्

Nyâsa. 1. अमावास्यायां प्रातरेवान्ते

Gâruḍa. 1. य इमां महाविद्याममावास्यायां शृणुयात्
— य इमां महाविद्याममावास्यायामधीयानो धारयेत्

## अमितद्युति

Nrip. 1. 6. पिनाकिनं ह्यमितद्युतिम्

## अमितविक्रम

Gîtâ. 11. 40. अनन्तवीर्यामितविक्रमस्त्वम्

## अमितौजस्

Kaush. 1. 3. अमितौजाः पर्यंकः
5. स आगच्छत्यमितौजसं पर्यंकम्

## अमुख

Brih. 3. 8. 8. अमुखममात्रम्

## अमुत्र

Katha. 4. 10. यदेवेह तदमुत्र यदमुत्र तदन्विह

Gîtâ. 6. 40. पार्थ नैवेह नामुत्र

## अमुर्हि

Brih. 1. 5. 23. यर्ह्येते ऽमुर्ह्यभ्रियन्त

## अमूढ

Nrisut. 9. अमूढो मूढ इव व्यवहरन्नास्ते

Gîtâ. 15. 5. गच्छन्त्यमूढाः पदमव्ययं तत्

## अमूर्त्त

Brih. 2. 3. 1. द्वे वाव ब्रह्मणो रूपे मूर्त्तं चैवामूर्त्तं च Maitri 6. 3.

Brih. 2. 3. 3. अथामूर्त्तं वायुश्चान्तरिक्षं च —एतस्यामूर्त्तस्य .. एष रसः
5. अथामूर्त्तं प्राणश्च यश्चायमन्तरात्मन्नाकाशः
Maitri. 6. 3. यदमूर्त्तं तत्सत्यं तद्ब्रह्म
7. 1. अचिन्त्यो ऽमूर्त्तः
2. अलिङ्गो ऽमूर्त्तः
Muṇḍ. 2. 1. 2. दिव्यो ह्यमूर्त्तः पुरुषः
Praśna 1. 5. रयिर्वा एतत्सर्वं यन्मूर्त्तं चामूर्त्तं च
Gauḍa. 2. 23. अमूर्त्त इति च तद्विदः
Nâr. 2. मूर्त्तामूर्त्तं च नारायणः

## अमूर्त्तिमत्

Maitri. 6. 14. कालो मूर्त्तिरमूर्त्तिमान्

## अमूल

Chhâ. 6. 8. 3. नेदममूलं भविष्यति 5.

## अमृत

Ait. 4. 6. स्वर्गे लोके सर्वान् कामानाप्त्वामृतः समभवत् 5. 4; Atmapra. 1.
Kaush. 2. 5. एते अनन्ते अमृते आहुती
14. यदमृता देवास्तदमृतो भवति य एवं वेद
3. 2. मामायुरमृतमित्युपास्व —स यो मामायुरमृतमित्युपास्ते
8. स एष प्राण एव प्रज्ञात्मानन्दो ऽजरो ऽमृतः
Kena. 2. धीराः प्रेत्यास्माल्लोकादमृता भवन्ति 13.
12. विद्यया विन्दते ऽमृतम्
Chhâ. 1. 4. 4. एतदक्षरमेतदमृतमभयं तत्प्रविश्य देवा अमृता अभवन्
Chhâ. 1. 4. 5. स्वरममृतमभयं प्रविशति — यदमृता देवास्तदमृतो भवति
3. 1. 2. ता अमृता आपः 3. 2. 1; 3. 3. 1; 3. 4. 1; 3. 5. 1.
3. 5. 4. तानि वा एतान्यमृतानाममृतानि वेदा ह्यमृतास्तेषामेतान्यमृतानि
3. 6. 1. यत्प्रथमममृतं तद्वसव उपजीवन्ति (similarly 4 times more).
— अमृतं दृष्ट्वा तृप्यन्ति 3. 7. 1; 3. 8. 1; 3. 9. 1; 3. 10. 1.
3. स य एतदेवममृतं वेद .. एतदेवामृतं दृष्ट्वा तृप्यति 3. 7. 3; 3. 8. 3; 3. 9. 3; 3. 10. 3.
3. 12. 6. त्रिपादस्यामृतं दिवि
4. 15. 1. एतदमृतमभयमेतद्ब्रह्म 8. 3. 4; 8. 7. 4; 8. 8. 3; 8. 10. 1; 8. 11. 1; Maitri. 2. 2; Nṛisut. 8 (4 times).
7. 24. 1. यो वै भूमा तदमृतम्
8. 3. 5. तद्यत्सत्तदमृतम्
8. 12. 1. अमृतस्याशरीरस्यात्मनो ऽधिष्ठानम्
8. 14. 1. तद्ब्रह्म तदमृतं स आत्मा
Brih. 1. 3. 28. मृत्योर्मामृतं गमय (ter).
— मृत्युर्वा असत्सदमृतम्
— अमृतं मा कुर्वित्येवैतदाह (bis).
— मृत्युर्वै तमो ज्योतिरमृतम्
1. 4. 6. मर्त्यः सन्नमृतानसृजत
1. 5. 17. प्राणा अमृता आविशन्ति
1. 6. 3. एतदमृतं सत्येन छन्नं प्राणो वा अमृतम्

Bṛih. 2. 3. 1. द्वे वाव ब्रह्मणो रूपे .. मर्त्यं चामृतं च
3. एतदमृतमेतद्यदेतत्त्यं .. एतस्यामृतस्यैतस्य यत एतस्य त्यस्य. 5.
2. 4. 2. कथं तेनामृता स्यामिति
3. येनाहं नामृता स्यां 4. 5. 4.
2. 5. 1. इदममृतमिदं ब्रह्मेदं सर्वम् (14 times).
3. 7. 3. एष त आत्मान्तर्याम्यमृतः 4—23.
3. 9. 10. तस्य का देवतेत्यमृतमिति
4. 3. 12. बहिः कुलायादमृतश्चरित्वा
— स ईयते ऽमृतो यत्रकामम्
4. 4. 7. अथ मर्त्यो ऽमृतो भवति Kaṭha. 6. 14, 15.
—अयमशरीरो ऽमृतः प्राणः
4. 4. 14. य एतद्विदुरमृतास्ते भवन्ति Kaṭha. 6. 2, 9. Śwet. 3. 1, 10, 13; 4. 17, 20.
16. ज्योतिषां ज्योतिरायुः .. अमृतम्
17. विद्वान्ब्रह्मामृतो ऽमृतम्
25. अजरो ऽमरो ऽमृतो ऽभयः
4. 5. 3. स्यां न्वहं तेनामृताहो नेति
5. 14. 8. शुद्धः पूतो ऽजरो ऽमृतः
5. 15. 1. वायुरनिलममृतम् Iśâ. 17.
Iśâ. 11. विद्ययामृतमश्नुते Maitri. 7. 9.
14. संभूत्यामृतमश्नुते
Tait. 1. 4. 1. अध्यमृतात्संबभूव
— अमृतस्य देव धारणो भूयासम्
1. 6. 1. अमृतो हिरण्मयः
2. शान्तिसमृद्धममृतम्
1. 10. 1. सुमेधा अमृतो ऽक्षितः
3. 10. 3. प्रजातिरमृतमानन्द इत्युपस्थे
Tait. 3. 10. 6. पूर्वं देवेभ्यो ऽमृतस्य ना३भायि Nṛip. 2. 4.
Kaṭha. 1. 28. अजीर्यताममृतानामुपेत्य
5. 8. तदेव शुक्रं तद्ब्रह्म तदेवामृतम्. 6. 1.
6. 17. तं विद्याच्छुक्रममृतम्
Śwet. 1. 10. क्षरं प्रधानममृताक्षरं हरः
2. 5. शृण्वन्तु विश्वे अमृतस्य पुत्राः
3. 7. ईशं तं ज्ञात्वा अमृता भवन्ति
5. 1. क्षरं त्वविद्या ह्यमृतं तु विद्या
6. ते तन्मया अमृता वै बभूवुः
6. 6. ज्ञात्वात्मस्थममृतं विश्वधाम
17. स तन्मयो ह्यमृत ईशसंस्थः
19. अमृतस्य परं सेतुम्
Maitri. 3. 2. अमृतो ऽस्यात्मा बिन्दुरिव पुष्करे
4. 6. परस्यामृतस्याशरीरस्य 6. 27.
6. 22. एतदमृतमेतत् सायुज्यत्वम्
23. अचलममृतमच्युतम् 38; 7. 3.
24. तद्ब्रह्म चामृतं शुक्रम्
35. एतद्ब्रह्मैतदमृतमेतद्भर्गः (bis).
— एतद्यदादित्यस्य मध्ये अमृतम्
— आपो ज्योती रसो ऽमृतं ब्रह्म Śiras. 6; Prâṇâg. 1; Mahânâr. 13. 1; 15. 2, 3.
—एतच्छुक्रमेतदमृतमेतद्ब्रह्मविषयम्
Muṇḍ. 1. 1. 8. कर्मसु चामृतं (जायते).
1. 2. 11. यत्रामृतः स पुरुषो ह्यव्ययात्मा
2. 2. 2. तदमृतं तद्वेद्धव्यम्
5. अमृतस्यैष सेतुः
7. आनन्दरूपममृतं यद्विभाति

Muṇḍ. 2. 2. 11. ब्रह्मैवेदममृतं पुरस्तात्
3. 2. 9. गुहाग्रन्थिभ्यो विमुक्तो ऽमृतो भवति
Mahânâr. 1. 7. तदेव शुक्रममृतं तद्ब्रह्म
11. य एनं विदुरमृतास्ते भवन्ति
2. 4. प्र तद्वोचे अमृतं नु विद्वान्
5. यत्र देवा अमृतमानशानाः (अमृतत्वं Nârâyaṇa).
9. 12. जिह्वा देवानाममृतस्य नाभिः
11. 7. या सा सत्येत्यमृता
12. 3. अन्नमायुरमृतो जीवो विश्वः
14. 1. अमृतमापः
15. 8. प्राणे निविष्टो ऽमृतं जुहोमि 9.
— अपाने निविष्टो ऽमृतं जुहोमि 9.
— व्याने निविष्टो ऽमृतं जुहोमि 9.
— उदाने निविष्टो ऽमृतं जुहोमि 9.
— समाने निविष्टो ऽमृतं जुहोमि
16. 1. प्राणे निविश्यामृतं हुतम् (similarly 4 times more).
Praśna. 1. 10. एतदमृतमभयमेतत्परायणम्
2. 5. सदसच्चामृतं च यत्
3. 11. न ह्यस्य प्रजा हीयते ऽमृतो भवति
12. अमृतमश्नुते
5. 7. शान्तमजरममृतमभयम्
6. 5. अकलो ऽमृतो भवति
Kaivalya. 6. शिवं प्रशान्तममृतम्
Gauḍa. 3. 19. मर्त्यताममृतं व्रजेत्
20. अजातो ह्यमृतो भावः
21. न भवत्यमृतं मर्त्यं न मर्त्यममृतं तथा 4. 7.
22. स्वभावेनामृतो यस्य भावः
— कृतकेनामृतस्तस्य 4. 8.
Gauḍa. 4. 6. अजातो ह्यमृतो धर्मः
8. स्वभावेनामृतो यस्य धर्मः
Nṛip 1. 4. अन्नममृतम्
6. तमेवं विद्वानमृत इह भवति
2. 4. यस्य छायामृतम्
Nṛisut. 1. तदेकमजरममृतमभयम्
2. अजरममरममृतमभयम्
3. ज्ञो ऽमृतो हुतसंवित्कः
Śiras. 2. यो वै रुद्रः.. यच्चामृतम्
3. अपाम सोमममृता अभूम
— किमु धूर्त्तिरमृतं मर्त्यं च
Prâṇâg. 1. आपो ऽमृतमसि
— अमृतं प्राणे जुहोमि
2. अमृताय त्वोपदधामि
— सो ऽस्यान्ते अमृतायामृतयोनौ
Atmapra. 1. अमृते लोके अक्षिते (bis).
Jâbâla. 3. शतरुद्रियेणेत्येतान्येव ह वा अमृतस्य नामानि
— एतैर्ह वा अमृतो भवति (4 MSS. add कथं जानीयाम्)
Râmot. 5. ब्रह्मानन्दामृतम् (3).
— यो वै श्रीरामः.. यच्चामृतम् (16).
Mukti. 2. 75. अजो ऽमरश्चैव तथाजरो ऽमृतः
Gîtâ. 9. 19. अमृतं चैव मृत्युश्च
10. 18. तृप्तिर्हि शृण्वतो नास्ति मे ऽमृतम्
13. 12. यज्ज्ञात्वामृतमश्नुते
14. 20. विमुक्तो ऽमृतमश्नुते
27. अमृतस्याव्ययस्य च

## अमृतत्व

Kaush. 2. 10. तेनामृतत्वस्येशाने मा त्वं पुत्र्यमघं निगाः
3. 2. प्राणेन ह्येवास्मिंल्लोके ऽमृतत्वमाप्नोति

Kaush. 3. 2. आप्नोत्यमृतत्वमक्षितिं स्वर्गे लोके

Kena. 12. अमृतत्वं हि विन्दते

Chhâ. 2. 22. 2. अमृतत्वं देवेभ्य आगायानि
2. 23. 2. ब्रह्मसंस्थो ऽमृतत्वमेति
8. 6. 6. तयोर्ध्वमायन्नमृतत्वमेति
Kaṭha. 6. 16.

Bṛih. 2. 4. 2. अमृतत्वस्य तु नाशास्ति वित्तेन 4. 5. 3.
4. 5. 15. एतावदरे खल्वमृतत्वमिति

Kaṭha. 1. 13. स्वर्गलोका अमृतत्वं भजन्ते
4. 1. आवृत्तचक्षुरमृतत्वमिच्छन्
2. अथ धीरा अमृतत्वं विदित्वा
6. 8. अमृतत्वं च गच्छति
Nṛip. 3.1;4.3; Atmapra. 1 (ter); Râmot. 2, 5.

Śwet. 1. 6. जुष्टस्ततस्तेनामृतत्वमेति
3. 15. उतामृतत्वस्येशानः

Maitri. 6. 24. एनं दृष्ट्वामृतत्वं गच्छति
36. पुण्यलोकविजित्यर्थाया-मृतत्वाय च

Mahânâr. 9. 12. उपांशुना सममृतत्वमानट्
10. 5. त्यागेनैके अमृतत्वमानशुः
Kaivalya. 2.
15. 10. ब्रह्मणि स आत्मामृतत्वाय
16. 1.

Gauḍa. 4. 92. सो ऽमृतत्वाय कल्पते
Brahmav. 14; Gîtâ. 2. 15.

Nṛip. 1. 2. यो जानीते सो ऽमृतत्वं च गच्छति 3-7; 2. 3; 4. 1.
7. येनासावमृतीभूत्वा सो ऽमृतत्वं च गच्छति

Nṛisut. 7. अमरत्वादजरत्वादमृतत्वात्
— ब्रह्म ह वा इदं सर्वममृतत्वात्

Kshur. 25. अमृतत्वं समाप्नोति (most MSS. omit this verse).

Mahâ. 4. जाप्येनामृतत्वं च गच्छति

Nyâsa. 1. अमृतत्वाय कल्पताम्

Nâr. 2. ब्रह्मत्वं च गत्वामृतत्वं च गच्छति
—ततो ऽमृतत्वमश्नुते
Gopi. 3.

Jâbâla. 3. किं जप्येनामृतत्वं ब्रूहि

## अमृतनाद

Mukti. 1. *vide* सरस्वतीरहस्य

## अमृतनिषेवण

Haṁsa. 2. षष्ठे ऽमृतनिषेवणम्

## अमृतबिन्दु

Mukti. 1. *vide* सरस्वतीरहस्य

## अमृतमय

Bṛih. 2. 5. 1. तेजोमयो ऽमृतमयः पुरुषः (28 times).

Nṛip. 5. 2. ब्रह्ममयममृतमयं भवति

Nṛisut. 3. अमृतमयश्चतुरात्मा

## अमृतयोनि

Mahânâr. 14. 3. इदमहं माममृतयोनौ सत्ये ज्योतिषि जुहोमि
4. इदमहं माममृतयोनौ सूर्ये ज्योतिषि जुहोमि

Prâṇâg. 2. सो ऽस्यान्ते अमृतायामृतयोनौ (so four MSS.)

## अमृतसम्भूत

Mahânâr. 4. 2. दूर्वा अमृतसम्भुताः (°ता in four MSS.)

## अमृतस्थान

Dhyâna. 23. अमृतस्थानं विजानीयात्

## अमृताख्य

Maitri. 6. 7. आत्मनो ऽस्मा नेतामृताख्यः

## अमृतापिधान

Mahânâr. 15. 10. अमृतापिधानमसि

## अमृतीभू

Nṛip. 1. 7. येनासावमृतीभूत्वा सो ऽमृतत्वं च गच्छति

Jâbâla. 1. येनासावमृतीभूत्वा मोक्षी भवति Râmot. 1.

## अमृतोद्भव

Gîtâ. 10. 27. उच्चैःश्रवसं . . अमृतोद्भवम्

## अमृतोपम

Gîtâ. 18. 37. परिणामे ऽमृतोपम्
38. यत्तदग्रे ऽमृतोपमम्

## अमृतोपस्तरण

Mahânâr. 15. 7. अमृतोपस्तरणमसि Prâṇâg. 1.

## अमृत्यु

Kaush. 1. 2. तन्म ऋतवो ऽमृत्यव आभरध्वम्

## अमृत्युमृत्यु

Nṛisut. 6. मृत्युमृत्युममृत्युमृत्युं . . बुबुधिरे

## अमृषा

Bṛih. 3. 9. 28. यथा वृक्षो वनस्पतिस्तथैव पुरुषो ऽमृषा

## अमेध्य

Mahânâr. 5. 1. यदपां क्रूरं यदमेध्यम्

Gîtâ. 17. 10. उच्छिष्टमपि चामेध्यम्

## अमेय

Nṛisut. 5. न ह्यन्यदस्त्यमेयमनात्मप्रकाशम्

## अमोघ

Chhâ. 7. 14. 2. अमोघा ह्यस्याशिषो भवन्ति

## अमोघा (= क्ष)

Râmap. 76. क्षुधा क्रोधिन्यमोघा च

## अमोहत्व

Nṛisut. 7. अशोकत्वादमोहत्वात्

## अमौन

Bṛih. 3. 5. 1. अमौनं च मौनं च निर्विद्य

## अम्बया

Kaush. 1. 3. अम्बया नद्यः

## अम्बर

Kaivalya. 23. न चानिलो मे ऽस्ति न चाम्बरं च

## अम्बरीष

Maitri. 1. 4. *vide* आदि

## अम्बा

Kaush. 1. 3. अम्बाश्चाम्बायवीश्चाप्सरसः

## अम्बायवी (!)

Kaush. 1. 3. अम्बाश्चाम्बायवीश्चाप्सरसः (*vide* Goldstücker's Lexicon).

## अम्बिका

Nṛip. 3. 1. पाहि . . औपलामम्बिकाम्

## अम्बिकापति

Mahânâr. 13. 4. अम्बिकापतये . . नमः

## अम्बु

Śwet. 1. 5. पञ्चस्रोतोम्बु

## अम्बुभक्ष

Nyâsa. 2. वायुभक्षो ऽम्बुभक्षो वा

## अम्बुवेग

Gîtâ. 11. 28. यथा नदीनां बहवो ऽम्बुवेगाः

## अम्भस्

Ait. 1. 2. अम्भो मरीचीर्मरमापः
— अदो ऽम्भः परेण दिवः

Mahânâr. 1. 1. अम्भस्यपारे भुवनस्य मध्ये

Râmap. 80. प्राणो ऽम्भो विद्यया युतम्

Gîtâ. 2. 67. वायुर्नावमिवाम्भसि
5. 10. पद्मपत्रमिवाम्भसा

## अम्भिणी

Bṛih. 6. 5. 3. वागाम्भिण्याः
— अम्भिण्यादित्यात्

## अम्ल

Garbha. 1. *vide* रस

Gîtâ. 17. 9. *vide* विदाहिन्

## अयक्ष्म

Nîla. 6. यथा नः सर्वमिज्जगदयक्ष्मम्
17. तया . . अस्मानयक्ष्मया परिभुज

## अयजमान

Chhâ. 8. 8. 5. अश्रद्दधानमयजमानम्

## अयज्ञ

Gîtâ. 4. 31. नायं लोको ऽस्त्ययज्ञस्य

## अयज्ञोपवीत

Nṛisut. 6. आशिखा अयज्ञोपवीताः

## अयज्ञोपवीतिन्

Jâbâla. 5. अयज्ञोपवीती कथं ब्राह्मणः

## अयति

Gîtâ. 6. 37. अयतिः श्रद्धयोपेतः

## अयत्नोपनत

Mukti. 2. 23. अयत्नोपनतेष्वक्षिदृग्द्रव्येषु

## अयथावत्

Gîtâ. 18. 31. अयथावत्प्रजानाति

## अयन

Śwet. 3. 8. नान्यः पन्था विद्यते ऽयनाय
6. 15.

Praśna. 1. 9. तस्यायने दक्षिणं चोत्तरं च

Gîtâ. 1. 11. अयनेषु च सर्वेषु

## अयशस्

Bṛih. 6. 4. 7. इत्ययशा एव भवति

Gîtâ. 10. 5. तपो दानं यशो ऽयशः

## अयस्कार

Maitri. 6. 27. अग्न्ययस्कारादयः

## अयस्पिण्ड

Maitri. 3. 3. यथाग्निनायस्पिण्डो वाभिभूतः
— यथायस्पिण्डे हन्यमाने
6. 27. भूमावयास्पिण्डं निहितम्
— मृद्वत्संस्थमयास्पिण्डम्

## अयाचत्

Kaush. 2. 1. एष धर्मो ऽयाचतो भवति 2.

## अयाचमान

Kaush. 2. 1. अयाचमानाय बलिं हरन्ति (bis) ; 2. 2 (bis).

## अयाचित

Mahânâr 17. 6. त्रिसुपर्णमयाचितं ब्राह्मणाय दद्यात्
7. य इमं त्रिसुपर्णमयाचितं ब्राह्मणाय दद्यात् 8.

## अयाज्य

Bṛih. 4. 1. 3. प्राणस्य वै कामायायाज्यं याजयति

## अयाज्ययाजक

Maitri. 7. 8. अयाज्ययाजकाः शूद्रशिष्याः

## अयास्य

Bṛih. 1. 3. 8. अयमास्ये ऽन्तरिति सो ऽयास्यः
19. अयास्य आङ्गिरसः 24.
2. 6. 3. पन्थाः सौभरो ऽयास्यादाङ्गिरसात् 4. 6. 3.
—अयास्य आङ्गिरस आभूतेस्त्वाष्ट्रात् 4. 6. 3.

## अयुक्त

Kaṭha. 3. 5. अयुक्तेन मनसा सदा
Maitri. 4. 3. आश्रमेष्वेवानवस्थस्तपस्वी वेत्युच्यता इत्येतदयुक्तम्
Gîtâ. 2. 66. नास्ति बुद्धिरयुक्तस्य न चायुक्तस्य भावना
5. 12. अयुक्तः कामकारेण
18. 28. अयुक्तः प्राकृतः स्तब्धः

## अयुत

Śiras. 7. प्रणवानामयुतं जप्तं भवति Mahâ. 4.

## अयोग

Gîtâ. 5. 6. दुःखमाप्तुमयोगतः

## अयोध्या

Mukti. 1. 1. अयोध्यानगरे रम्ये

## अयोनि

Maitri. 6. 20. निरात्मकत्वादसंख्यो ऽयोनिः
Nṛisut. 9. अयोनि स्वात्मस्थम्

## 1. अर

Kaush. 3. 8. यथा रथस्यारेषु नेमिरर्पितो नाभावरा अर्पिताः
Chhâ. 7. 15. 1. यथा वा अरा नाभौ समर्पिताः
Bṛih. 2. 5. 15. यथा रथनाभौ च रथनेमौ चाराः सर्वे समर्पिताः
Muṇḍ. 2. 2. 6. अरा इव रथनाभौ Praśna. 2. 6; 6. 6.
Nṛip. 5. 1. नाभ्यां वा एते अराः प्रतिष्ठिताः
—अरैर्वा एतत् खुवद्धं भवति
—वेदा वा एते अराः

## 2. अर

Chhâ. 8. 5. 3. अरश्च ह वै ण्यश्चार्णवौ ब्रह्मलोके
4. अरं च ण्यं चार्णवौ ब्रह्मलोके

## 3. अर (=अल्प)

Tait. 2. 7. 1. यदा ह्येवैष एतस्मिन्नुदरमन्तरं कुरुते

## अरजस्क

Nṛisut. 9. असत्त्वमरजस्कमतमस्कम्

## अरणि

Bṛih. 6. 4. 22. हिरण्मयी अरणी
Kaṭha. 4. 8. अरण्योर्निहितो जातवेदाः
Śwet. 1. 14. स्वदेहमरणिं कृत्वा Dhyâna. 20.
15. अरणीषु चाग्निः; Brahma. 3.
Kaivalya. 11. आत्मानमरणिं कृत्वा Brahma. 3.
Nyâsa. 1. अग्नावरुणी हुत्वा

## अरणिदेश

Kaṭhaśru. 3. अरणिदेशाद्भस्ममुष्टिं पिबेदित्येके

## अरण्य

Chhâ. 5. 10. 1. ये चेमे ऽरण्ये श्रद्धातप इत्युपासते
Bṛih. 5. 11. 1. यं प्रेतमरण्यं हरन्ति
6. 2. 15. ये चामी अरण्ये श्रद्धां सत्यमुपासते

Maitri. 1. 2. अरण्यं निर्जगाम
6. 8. अरण्यं गत्वा . . उपलभेतैनम्

Mund. 1. 2. 11. तपःश्रद्धे ये ह्युपवसन्त्यरण्ये

Mahânâr. 21. 2. शम इत्यरण्ये मुनयः

Siras. 1. गुह्यो ऽहमरण्यो ऽहम्

Nyâsa. 1. अरण्ये गत्वा . . ब्राह्मेष्टिं निर्वपेत्

Kathaśru. 3. सो ऽरण्यं परेत्य

## अरण्यायन

Chhâ. 8. 5. 3. यदरण्यायनमित्याचक्षते

## अरति

Gitâ. 13. 10. अरतिर्जनसंसदि

## अरस

Brih. 3. 8. 8. अरसमगन्धम् Nrisut. 9.

Katha. 3. 15. अरसं नित्यमगन्धवच्च यत् Mukti. 2. 72.

## अरसयितृ

Maitri. 6. 11. अघ्रातारसयिता भवति

## अरागद्वेषतस्

Gitâ. 18. 23. अरागद्वेषतः कृतम्

## अराति

Mahânâr. 22. 1. तपसा सपत्नान् प्रणुदामारातीः
— दानेनारातीरपानुदन्त

Siras. 3. किं नूनमस्मान् कृणवदरातिः

## अरातीय

Mahânâr. 6. 2. अरातीयतो निदहाति वेदः

## अरि

Gitâ. 6. 9. सुहृन्मित्रार्युदासीनमध्यस्थद्वेष्यबन्धुषु

## अरिन्

Râmap. 92. गदारिशंखाब्जधरम्

## अरिमर्द्दन

Râmap. 54. अंगदं चारिमर्द्दनम्

Mukti. 2. 8. विद्धि त्वमरिमर्द्दन

## अरिमारण

Râmap. 34. आश्वरिमारणं कुरु

## अरिष्ट

Chhâ. 3. 15. 3. अरिष्टं कोशं प्रपद्ये

Yogat. 15. निश्चितं चात्मभूतानामरिष्टं योगसेवया

## अरिष्टनेमि

Nrip. 1. 1. स्वस्ति नस्तार्क्ष्यो ऽरिष्टनेमिः Nrisut. 1.

## अरिष्टि

Kaush. 2. 11. येन प्रजापतिः प्रजाः पर्यगृह्णात्तदरिष्टचै

Brih. 1. 4. 16. स्वाय लोकायारिष्टिमिच्छेत्
— सर्वाणि भूतान्यारिष्टिमिच्छन्ति

## अरिसूदन

Gitâ. 2. 4. पूजार्हावरिसूदन

## 1. अरुण

Nila. 9. असौ यस्ताम्रो अरुणः

## 2. अरुण

Brih. 6. 5. 3. उद्दालको ऽरुणात्
— अरुण उपवेशेः

## अरुन्धती

Nila. 21. कल्माषपुच्छमोषधे जंभयाश्वरुन्धति

## अरुन्मुख

Kaush. 3. 1. अरुन्मुखान् यतीन् सालावृकेभ्यः प्रायच्छम्

## अरूप, अरूपक

Katha. 3. 15. अशब्दमस्पर्शमरूपम्
Nrisut. 9; Mukti. 2. 72.

Śwet. 3. 10. ततो यदुत्तरतरं तदरूपम्

Kaivalya. 6. चिदानन्दमरूपमद्भुतम्

Gauḍa. 3. 36. अनामकमरूपकम्

Mukti. 2. 32. सरूपो ऽरूप एव च
33. अरूपो देहमुक्तिगः
36. अरूपस्तु मनोनाशः

## अरूपज्ञ

Bṛih. 4. 4. 1. तथारूपज्ञो भवति

## अरेतस्

Bṛih. 6. 4. 10. इत्यरेता एव भवति

## अरेफजात

Amṛita. 24. अरेफजातमुभयोष्ठवर्जितम्

## अर्क

Bṛih. 1. 2. 2. आपो वा अर्कः
7. अयमग्निरर्कः
— तावेतावर्काश्वमेधौ

Śwet. 2. 11. नीहारधूमार्कानिलानलानाम्

Maitri. 6. 8. एष हि खल्वात्मा . . अर्कः

Praśna. 4. 2. अर्कस्यास्तं गच्छतः

Dhyâna. 15. तत्रार्कचन्द्रवह्नीनाम्

Râmap. 88. अर्कविध्वग्नितेजांसि

## अर्कत्व

Bṛih. 1. 2. 1. तदेवार्क्यस्यार्कत्वम्
— य एवमेतदर्क्यस्यार्कत्वं वेद

## अर्क्य

Bṛih. 1. 2. 1. *vide* अर्कत्व

## अर्घांश

Râmap. 73. अन्त्यार्घांशयुतः

## अर्घ्य

Bṛih. 6. 2. 4. अथ हास्मा अर्घ्यं चकार

## अर्च्

Bṛih. 1. 2. 1. सो ऽर्चन्नचरत्तस्यार्चत आपो ऽजायन्तार्चते वै मे कमभूत्

Maitṛi. 4. 6. ता अभिध्यायेदर्चयेन्निह्नुयाच
6. 5. ओमित्युक्तेनैताः प्रस्तुता अर्चिताः

Muṇḍ 1. 2. 6. प्रियां वाचमभिवदन्त्यो ऽर्चयन्त्यः
3. 1. 10. तस्मादात्मज्ञमर्चयेद्भूतिकामः

Mahânâr. 13. 1. अर्चयन्ति तपः सत्यम्
Śiras. 6.

Praśna. 6. 8. ते तमर्चयन्तस्त्वं हि नः पिता

Râmap. 86. रत्नासने देशिकं चार्चयित्वा
87. तांस्तस्य दिक्ष्वर्चयेच्च
88. अउमैरर्चितानि
89. ज्ञानात्मानं चार्चयेत्

Râmot. 4. क्षेत्रे ऽस्मिन्यो ऽर्चयेद्भक्त्या

Gîtâ. 7. 21. श्रद्धयार्चितुमिच्छति

## अर्चन

Nṛip. 5. 2. अनुष्टुभा होमं कुर्यादनुष्टुभार्चनम्

Râmot. 4. जपहोमार्चनादिभिः

## अर्चाविधि

Râmap. 85. अर्चाविधावस्य

## अर्चिमन्त्

Muṇḍ. 2. 2. 2. यदर्चिमद्यदणुभ्यो ऽणु

Nyâsa. 2. सन्न्यासं सहते ऽर्चिमान्

## अर्चिर्मार्ग

Gopî. 5. अर्चिर्मार्गविस्तृतं वेदार्थम्

## अर्चिस्

Chhâ. 4. 15. 5. अर्चिषमेवाभिसम्भवन्त्यर्चिषो ऽहः 5. 10. 1.
5. 4. 1. अहरर्चिः Bṛih. 6. 2. 9.
5. 5. 1. विद्युदर्चिः Bṛih. 6. 2. 10.
5. 6. 1. रात्रिरर्चिः Bṛih. 6. 2. 11.
5. 7. 1. जिह्वार्चिः
5. 8. 1. योनिरर्चिः Bṛih. 6. 2.13.
Bṛih. 6. 2. 12. वागर्चिः
14. अर्चिरर्चिः
15. ते ऽर्चिरभिसम्भवन्त्यर्चिषो ऽहः
Maitri. 6. 31. धूमार्चिर्विष्फुलिङ्गा इव
35. अर्चिषो वै यशस आश्रयवशात्
Muṇḍ. 1. 2. 2. यदा लेलायते ह्यर्चिः
2. 1. 8. सप्तार्चिषः समिधः Mahânâr. 8. 4.
12. 2. एतस्मिन्मण्डले अर्चिषि —एतस्मिन्मण्डले ऽर्चिर्दीप्यते
Praśna. 3. 5. तस्मादेताः सप्तार्चिषो भवन्ति
Mahâ. 3. तस्य मध्ये महानर्चिः (so MSS.)

## अर्चिसमप्रभ

Amṛita. 37. व्यानो ऽप्यर्चिसमप्रभः

## अर्जुन

Gîtâ. 1. 4. भीमार्जुनसमा युधि
47. एवमुक्त्वार्जुनः संख्ये
2. 2. अकीर्त्तिकरमर्जुन
45. निस्त्रैगुण्यो भवार्जुन
3. 7. नियम्यारभते ऽर्जुन
4. 5. तव चार्जुन
Gîtâ. 4. 9. मामेति सो ऽर्जुन
37. भस्मसात्कुरुते ऽर्जुन
6. 16. जाग्रतो नैव चार्जुन
32. समं पश्यति यो ऽर्जुन
46. तस्माद्योगी भवार्जुन
7. 16. जनाः सुकृतिनो ऽर्जुन
26. वर्त्तमानानि चार्जुन
8. 16. पुनरावर्त्तिनो ऽर्जुन
27. योगयुक्तो भवार्जुन
9. 19. सदसच्चाहमर्जुन
10. 32. मध्यं चैवाहमर्जुन
39. तदहमर्जुन
42. किं ज्ञानेन तवार्जुन
11. 47. मया प्रसन्नेन तवार्जुन
50. इत्यर्जुनं वासुदेवस्तथोक्त्वा
54. अहमेवंविधो ऽर्जुन
18. 9. नियतं क्रियते ऽर्जुन
34. धृत्या धारयते ऽर्जुन
61. हृद्देशे ऽर्जुन तिष्ठति
76. केशवार्जुनयोः

## अर्णव

Ait. 2. 1. महत्यर्णवे प्रापतन्
Chhâ. 8. 5. 2. अरश्च ह वै ण्यश्चार्णवौ
4. अरं च ण्यं चार्णवौ
Maitri. 6. 35. एतद्भानुरर्णवः
Mahânâr. 5. 5. ततः समुद्रो अर्णवः
6. समुद्रादर्णवादधि संवत्सरो अजायत

## अर्थ

Kaush. 2. 3. अर्थं ब्रूयाद्दूतं वा प्रहिणुयात्
Chhâ. 5. 11. 6. येन हैवार्थेन पुरुषश्चरेत्तं हैव वदेत्
Bṛih. 6. 4. 9. तस्यामर्थं निष्ठाय 10,11,21.
Iśâ. 8. अर्थान् व्यदधाच्छाश्वतीभ्यः समाभ्यः
Kaṭha. 2. 1. हीयते ऽर्थाद्य उ प्रेयो वृणीते

Katha. 3. 10. इन्द्रियेभ्यः परा ह्यर्था अर्थेभ्यश्च परं मनः
Śwet. 6. 23. तस्यैते कथिता ह्यर्थाः
Maitri. 2. 6. अमन्यतार्थानभ्रानीति
4. 2. शब्दस्पर्शादयो ह्यर्थाः
5. 1. स्वार्थे स्वाभाविके ऽर्थे च
6. 28. भूतेन्द्रियार्थानतिक्रम्य
7. 8. अर्थं पुरस्कृत्य
10. अयमर्थः स्यात्
11. सत्यानृतोपभोगार्थः
Muṇḍ. 3. 2. 6. वेदान्तविज्ञानसुनिश्चितार्थाः Mahânâr. 10. 6; Kaivalya. 3.
Praśna. 4. 5. श्रुतं तमेवार्थमनुशृणोति
Gauḍa. 4. 26. चित्तं न संस्पृशत्यर्थम्
—अभूतो हि यतश्चार्थः
Nṛip. 4. 2. न साम्नार्थो ऽस्ति यः सावित्रीं वेद
Nyâsa. 2. संविभज्य सुतानर्थान्
(Nâr. has अर्थैः)
Râmap. 12. अर्थं मन्त्रो वदत्ययम्
Mukti. 1. 17. वेदान्तवाक्यार्थविचारात्
2. 20. नैष्कर्म्येण न तस्यार्थस्तस्यार्थो ऽस्ति न कर्मभिः
Gîtâ. 2. 27. तस्मादपरिहार्ये ऽर्थे
46. यावानर्थ उदपाने
3. 18. नैव तस्य कृतेनार्थः
34. इन्द्रियस्येन्द्रियस्यार्थे
13. 11. तत्त्वज्ञानार्थदर्शनम्
18. 34. यया तु धर्मकामार्थान्

## अर्थकाम

Gîtâ. 2. 5. हत्वार्थकामांस्तु गुरूनिहैव

## अर्थ, अर्थाय, अर्थे

Maitri. 6. 14. आत्मसम्बोधनार्थम्
36. पुण्यलोकविजित्यर्थाय
Muṇḍ. 1. 2. 12. तद्विज्ञानार्थम्
Gauḍa. 1. 9. भोगार्थं सृष्टिरित्यन्ये क्रीडार्थमिति चापरे
Nṛip. 5. 2. दक्षिणार्थं तावत्कल्पते
Garbha. 4. यन्मया परिजनस्यार्थे कृतं कर्म
Nyâsa. 3. जन्तुसंरक्षणार्थम्
Kaṭhaśru. 4.
Kaṭhaśru. 1. प्राणसन्धारणार्थम्
Jâbâla. 6.
Parama. 1. स्वशरीरस्योपभोगार्थाय
Aruṇeya. 5. भिक्षार्थं ग्रामं प्रविशन्ति
Gopî. 4. लोकानुग्रहार्थम्
Kṛish. 21. संहारार्थं च शत्रूणाम्
— कृपार्थे सर्वभूतानाम्
Râmap. 7. उपासकानां कार्यार्थम्
35. स्वनिवृत्त्यर्थम्
Gîtâ. 1. 7. संज्ञार्थं तान्ब्रवीमि ते
9. मदर्थे त्यक्तजीविताः
33. येषामर्थे कांक्षितम्
3. 9. तदर्थं कर्म कौन्तेय
4. 8. धर्मसंस्थापनार्थाय
10. 11. तेषामेवानुकम्पार्थम्
11. 42. यच्चावहासार्थमसत्कृतो ऽसि
12. 10. मदर्थमपि कर्माणि कुर्वन्
16. 12. ईहन्ते कामभोगार्थम्
17. 12. दम्भार्थमपि चैव यत्
18. सत्कारमानपूजार्थम्
19. परस्योत्सादनार्थं वा
21. यत्तु प्रत्युपकारार्थम्

## अर्थव्यपाश्रय

Gîtâ. 3. 18. कश्चिदर्थव्यपाश्रयः

## अर्थसञ्चय

Gîtâ. 16. 12. ईहन्ते . . अर्थसञ्चयान्

## अर्थाभास

Gauḍa. 4. 26. नार्थाभासं तथैव च
— नार्थाभासस्ततः पृथक्

Sikhâ. 1. तृतीया कृष्णा विष्णुमती
Nâda. 9. पतङ्गी च तृतीया स्यात्
13. विद्याधरस्तृतीयायाम्
Piṇḍa. 5. तृतीयेन तु पिण्डेन
Haṁsa. 2. घण्टानादस्तृतीयः
— तृतीये स्वेदनं याति
Kâlâg. 2. यास्य तृतीया रेखा
Râmap. 53. तृतीयं वायुसूनुं च
Râmot. 2. मकारस्तृतीयाक्षरो भवति

## तृतीयसवन

Chhâ. 2. 24. 1. आदित्यानां च विश्वेषां च देवानां तृतीयसवनम्
11. पुरा तृतीयसवनस्योपाकरणात्
16. तस्मा आदित्याश्च विश्वे च देवास्तृतीयसवनं संप्रयच्छन्ति
3. 16. 4. इदं मे माध्यन्दिनं सवनं तृतीयसवनमनुसन्तनुत
5. यान्यष्टाचत्वारिंशद्वर्षाणि तत्तृतीयसवनम्
— जागतं तृतीयसवनम्
6. इदं मे तृतीयसवनमायुरनुसन्तनुत
Kâlâg. 2. तृतीया रेखा सा . . तृतीयसवनम्

## तृतीयान्तार्द्ध

Nṛip. 1. 6. षणं तृतीयान्तार्द्धस्याद्यम्

## तृद्

Bṛih. 3. 9. 28. तस्मात्तदा तृण्णात्प्रैति रसः

## तृप्

Ait. 3. 3. अभिव्याहृत्य हैवान्नमत्रप्स्यत् ( similarly in 4–9).
Chhâ. 3. 6. 1. एतदेवामृतं दृष्ट्वा तृप्यन्ति 3. 7. 1 ; 3. 8. 1 ; 3. 9. 1 ; 3. 10. 1.
Chhâ. 3. 6. 3. एतदेवामृतं दृष्ट्वा तृप्यति 3. 7. 3 ; 3. 8. 3 ; 3. 9. 3 ; 3. 10. 3.
5. 19. 1. प्राणाय स्वाहेति प्राणस्तृप्यति (similarly 4 times more).
2. प्राणे तृप्यति चक्षुस्तृप्यति (similarly 19 times more).
— तृप्यति प्रजया पशुभिरन्नाद्येन तेजसा ब्रह्मवर्चसेन 5. 20. 2 ; 5. 21. 2 ; 5. 22. 2 ; 5. 23. 2.
Bṛih. 1. 3. 18. तेनैतास्तृप्यन्ति
6. 3. 1. ते मा तृप्ताः सर्वैः कामैस्तर्पयन्तु
Kaṭha. 1. 26. न वित्तेन तर्पणीयो मनुष्यः
Maitri. 6. 23. तृप्तं स्थिरमचलममृतम् 7.3.
Gauḍa. 1. 4. स्थूलं तर्पयते विश्वम्
Siras. 1. तर्पयामि स्वेन तेजसा
Mukti. 2. 75. सदैव तृप्तो ऽहमितीह भावय
Gîtâ. 6. 8. ज्ञानविज्ञानतृप्तात्मा

## तृप्ति

Chhâ. 5. 19. 2. तस्यानु तृप्तिं तृप्यति प्रजया 5. 20. 2 ; 5. 21. 2 ; 5. 22. 2 ; 5. 23. 2.
Tait. 3. 10. 2. तृप्तिरिति वृष्टौ
Gauḍa. 1. 4. त्रिधा तृप्तिं निबोधत
Gîtâ. 10. 18. तृप्तिर्हि शृण्वतो नास्ति मे ऽमृतम्

## तृप्तिमन्त्

Chhâ. 7. 10. 2. अपो ब्रह्मेत्युपास्ते . . तृप्तिमान् भवति

## तृष्णा

Siras. 5. यस्मिन् क्रोधं या च तृष्णां क्षमां न . . हित्वा

## तृष्णासङ्गसमुद्भव

Gîtâ. 14. 7. रजो रागात्मकं . . तृष्णासङ्गसमुद्भवम्

## तृष्णेर्ष्याकुण्डलिन्

Maitri. 6. 28. सम्मोहमौली तृष्णेर्ष्याकुण्डली

## तृह्

Kaush. 3. 1. दिवि प्रह्लादीयानतृणम्

## तॄ

Chhâ. 7. 1. 3. तरति शोकमात्मवित्
— मा भगवाञ्छोकस्य पारं तारयतु
8. 4. 1. नैनं सेतुमहोरात्रे तरतः
2. एतं सेतुं तीर्त्वा (bis).

Bṛih. 4. 3. 22. तीर्णो हि तदा सर्वाञ्छोकान्
4. 4. 22. एतमु हैवैते न तरतः
— उभे उ हैवैष एते तरति
23. नैनं पाप्मा तरति सर्वं पाप्मानं तरति

Iśâ. 11. अविद्यया मृत्युं तीर्त्वा Maitri. 7. 9.
14. विनाशेन मृत्युं तीर्त्वा

Kaṭha. 1. 12. उभे तीर्त्वाशनायापिपासे
17. तरति जन्ममृत्यू
3. 2. अभयं तितीर्षतां पारम्

Maitri. 6. 21. तीर्त्वा पारमपारेण पश्चाद्युञ्जीत
28. अन्तर्हृदयाकाशस्य पारं तीर्त्वा

Muṇḍ. 3. 2. 9. तरति शोकं तरति पाप्मानम्

Praśna. 6. 8. अविद्यायाः परं पारं तारयसि

Nṛip. 2. 1. सर्वं पाप्मानमतरन् संसारं चातरन्

Nṛip. 2. 1. स पाप्मानं तरति 3. 1; 5. 4; Râmot. 2.
— स संसारं तरति Râmot. 2.
3. 1. स मृत्युं तरति 5. 4; Râmot. 2.
5. 4. स भ्रूणहत्यां तरति Râmot. 2.
— स ब्रह्महत्यां तरति Râmot. 2.
— स वीरहत्यां तरति Râmot. 2.
— स सर्वहत्यां तरति Râmot. 2.
— स सर्वं तरति Râmot. 2.

Kshur. 22. संसारं तरते तदा

Siras. 4. गर्भजन्मव्याधिजरामरणसंसारमहाभयात्तारयति

Râmap. 43. ततस्ततार हनुमान्

Râmot. 2. किं तारकं किं तरतीति

Gîtâ. 7. 14. मायामेतां तरन्ति ते
18. 58. मत्प्रसादात्तरिष्यसि

## तेजस्

Ait. 4. 1. सर्वेभ्योऽङ्गेभ्यस्तेजः संभूतम्

Kaush. 1. 6. तेजो भूतस्य भूतस्य
2. 6. तत्तेज इत्युपासीत
11. तेजो वै पुत्र नामासि (वेदो वै one MS.)
12. तस्यादित्यमेव तेजो गच्छति
— चंद्रमसमेव तेजो गच्छति
— विद्युतमेव तेजो गच्छति
— दिश एव तेजो गच्छति
13. तस्य चक्षुरेव तेजो गच्छति
— श्रोत्रं . . मनः . . प्राणमेव तेजो गच्छति
4. 2. अप्सु तेजः
10. तेजस आत्मेति वा . . एतमुपासे 18.

Kaush. 4. 10. एनमुपास्ते तेजस आत्मा भवति

Chhâ. 3. 1. 3. तेज इन्द्रियं वीर्यमन्नाद्यं रसो ऽजायत 3. 2. 2; 3. 3. 2; 3. 4. 2; 3. 5. 2.

3. 13. 1. तदेतत्तेजो ऽन्नाद्यमित्युपासीत

5. 19. 2. तृप्यति . . तेजसा ब्रह्मवर्चसेन

6. 2. 3. तत्तेजो ऽसृजत तत्तेज ऐक्षत बहु स्याम्

— तेजस एव तदध्यापो जायन्ते

6. 4. 1. तेजसस्तद्रूपम् 2, 3, 4, 6.

6. 5. 3. तेजो ऽशितं त्रेधा विधीयते

6. 6. 4. तेजसः सोम्याश्यमानस्य

6. 8. 4. तेजोमूलमन्विच्छ तेजसा . . सन्मूलमन्विच्छ 6.

5. तेज एव तत्पीतं नयते

— तत्तेज आचष्ट उदन्या

6. प्राणस्तेजसि तेजः परस्यां देवतायाम् 6. 15. 1, 2.

7. 2. 1. अपश्च तेजश्च 7. 7. 1.

7. 4. 2. समकल्पतामापश्च तेजश्च

7. 11. 1. तेजो वा अद्भ्यो भूयः

— तेज एव तत्पूर्वं दर्शयित्वाथापः सृजते तेज उपास्स्वेति (bis).

2. यस्तेजो ब्रह्मेत्युपास्ते

— अस्ति भगवस्तेजसो भूय इति तेजसो वाव भूयो ऽस्तीति

7. 12. 1. आकाशो वाव तेजसो भूयान्

7. 26. 1. आत्मतस्तेजः

8. 6. 3. तेजसा हि तदा सम्पन्नो भवति

Brih. 3. 7. 14. यस्तेजसि तिष्ठंस्तेजसो ऽन्तरो यं तेजो न वेद यस्य तेजः शरीरं यस्तेजो ऽन्तरो यमयति

4. 4. 7. अयमशरीरो ऽमृतः प्राणो ब्रह्मैव तेज एव

5. 15. 1. व्यूह रश्मीन् समूह तेजः Isâ. 16.

6. 4. 5. पुनर्मामैत्विन्द्रियं पुनस्तेजः

6. मयि तेज इन्द्रियं यशः

Katha. 1. 26. सर्वेन्द्रियाणां जरयन्ति तेजः

Swet. 2. 12. पृथ्व्याप्यतेजोनिलखे 6. 2. (खानि)

Maitri. 1. 2. तेजसा निर्दहन्निव

6. 4. एतस्यैतत्तेजो यदसा आदित्यः

27. ब्रह्मणो वावैतत्तेजः . . यच्छरीरस्यौष्ण्यम्

— तेजश्चैवाग्निसूर्ययोः

35. नभसो ऽन्तर्गतस्य तेजसो ऽंशमात्रम् (4 times).

— द्विधर्मो ऽन्धं तेजसेन्धम्

36. तेजसः समृद्ध्यै

37. अपरिमितं तेजः 7. 11.

38. तेजोमध्ये स्थितं सत्त्वम्

7. 11. नभसः . . यत् परं तेजः

— तेजस्तत् . . उभयोस्तयोः

Mahânâr. 1. 3. येनादित्यस्तपति तेजसा

12. 8. आदित्यो वै तेज ओजो बलम्

Praśna. 2. 9. इन्द्रस्त्वं प्राण तेजसा

3. 9. तेजो ह वै उदानः

10. प्राणस्तेजसा युक्तः

4. 6. स यदा तेजसाभिभूतो भवति

8. तेजश्च तेजोमात्रा च

— तेजश्च विद्योतयितव्यं च

5. 5. स तेजसि सूर्ये सम्पन्नः

Nṛisut. 3. तेजसा शरीरत्रयं संव्याप्य
— तत्तेज आत्मचैतन्यरूपं ब-
लमवष्टभ्य

Chûl. 1. द्विवर्त्तमानं तेजसेद्धम्

Siras. 1. आपो ऽहं तेजो ऽहम्
— तर्पयामि स्वेन तेजसा
2. यो वै रुद्रः..यच्च तेजः

Garbha. 1. पृथिव्यापस्तेजोवायुराका-
शम्
— का आपः किं तेजः
— यदुष्णं तत्तेजः
— तेजः प्रकाशने

Mahâ. 1. तेजो द्वादशम्
3. तासु तेजो हिरण्मयमण्डम्

Brahma. 2. बलमस्तु तेजः

Râmap. 23. तेजसा वह्निना समः
49. वामे तेजः प्रकाशनम्
88. अर्कविध्वग्नितेजांसि

Mukti. 1. 33. तेजो नादो ध्यानं विद्या

Gîtâ. 7. 9. तेजश्चास्मि विभावसौ
10. तेजस्तेजस्विनामहम् 10.36.
11. 30. तेजोभिरापूर्य जगत्समग्रम्
15. 12. यदादित्यगतं तेजः
— तत्तेजो विद्धि मामकम्
16. 3. तेजः क्षमा धृतिः शौचम्
18. 43. शौर्यं तेजो धृतिर्दाक्ष्यम्

## तेजस्वन्त्

Chhâ. 7. 11. 2. तेजस्वतो लोकान्..अभि-
सिध्यति

## तेजस्वितम

Kaush. 2. 6. यथैतत्..तेजस्वितमं..भ-
वत्येवं हैव स..तेजस्वि-
तमो भवति

## तेजस्विन्

Chhâ. 2. 14. 2. तेजस्व्यन्नादो भवति
3. 13. 1.

Chhâ. 7. 11. 2. तेजस्वी वै स तेजस्वतो लो-
कान्..अभिसिध्यति

Bṛih. 2. 1. 4. तेजस्वीति..एतमुपासे
— एवमुपास्ते तेजस्वीह भवति
तेजस्विनी हास्य प्रजा भ-
वति

Tait. 2. 1. 1. तेजस्वि नावधीतमस्तु
3. 1. 1; Kaṭha. 6. 19.

Gîtâ. 7. 10. तेजस्तेजस्विनामहम् 10.36.

## तेजोंशसम्भव

Gîtâ. 10. 41. तत्तदेवावगच्छ त्वं मम ते-
जोंशसम्भवम्

## तेजोदा

Mahânâr. 24. 1. तेजोदास्त्वमस्यग्ने:

## तेजोबिन्दु

Tejo. 1. तेजोबिन्दुः परं ध्यानम्
(4 MSS., and Nârâya-
ṇa, read तेज°)

Mukti. 1. *vide* सरस्वतीरहस्य

## तेजोमण्डल

Praśna. 4. 2. एतस्मिंस्तेजोमण्डल एकी-
भवन्ति

## तेजोमय

Chhâ. 6. 5. 4. तेजोमयी वाक् 6. 6. 5;
6. 7. 6.

Bṛih. 2. 5. 1. तेजोमयो ऽमृतमयः पुरुषः
(28 times)
4. 4. 5. तेजोमयो ऽतेजोमयः

Śwet. 2. 14. तेजोमयं भ्राजते तत्सुध्मा-
तम्

Gîtâ. 11. 47. तेजोमयं विश्वमनन्तमाद्यम्

## तेजोमात्रा

Bṛih. 4. 4. 1. स एतास्तेजोमात्राः सम-
भ्याददानः

Praśna. 4. 8. तेजश्च तेजोमात्रा च

## तेजोरस

Brih. 1. 2. 2. तेजोरसो निरवर्त्ततामि:

## तेजोराशि

Gità. 11. 17. तेजोराशिं सर्वतो दीप्तिमन्तम्

## तेजोवृष

Maitri. 6. 34. मद्गुर्हंसस्तेजोवृषः

## तैजस

Brih. 2. 5. 8. तैजसस्तेजोमयो ऽमृतमयः पुरुषः

4. 4. 9. तेनैति ब्रह्मवित्पुण्यकृत्तैजसश्च

Mâṇḍû. 4. प्रविविक्तभुक् तैजसः Nrip. 4. 1; Râmot. 3.

10. स्वप्नस्थानस्तैजस उकारः

Gauḍa. 1. 1. ह्यन्तःप्रज्ञस्तु तैजसः

2. मनस्यन्तस्तु तैजसः

3. तैजसः प्रविविक्तभुक्

4. प्रविविक्तं तु तैजसम्

11. इष्येते विश्वतैजसौ

20. तैजसस्योत्वविज्ञाने

23. उकारश्चैव तैजसं (नयते)

Nṛisut. 1. सूक्ष्मभुक् चतुरात्मा तैजसः

2. स्वप्नस्थानश्चतुरात्मा तैजसः

Kathaśru. 3. तैजसानि गुरवे दद्यात्

## तैजसात्मक

Râmot. 3. शत्रुघ्नस्तैजसात्मकः

## तैतिल

Kshur. 17. नाडीषु तैतिलम्

19. यथा वास्यन्ति तैतिलम् (in both cases, one MS. has वै for तै)

## तैत्तिरीयक

Gauḍa. 3. 11. व्याख्यातास्तैत्तिरीयके

Mukti. 1. *vide* सरस्वतीरहस्य

## तैल

Swet. 1. 15. तिलेषु तैलं दधिनीव सर्पिः Brahma. 3.

Dhyâna. 7. तिलमध्ये यथा तैलम् Yogat. 8.

9. तिलानां तु यथा तैलम्

Haṁsa. 1. तिलेषु तैलमिव

Vâsu. 3. तैलं तिलेषु काष्ठेषु वह्निः

Mukti. 1. 9. तिलेषु तैलवद्वेदे वेदान्तः

## तैलधार

Dhyâna. 18. तैलधारमिवाच्छिन्नम्

## तोक

Swet. 4. 22. मा नस्तोके . . रीरिषः

Mahânâr. 6. 4. भवा तोकाय तनयाय शंयोः

Kâlâg. 1. मा नस्तोकेति समुद्धृत्य

## तोय

Mahânâr. 1. 4. तोयेन जीवान्विससर्ज भूम्याम्

Dhyâna. 21. तोयमाकर्षयेत् पुनः

Piṇḍa. 3. अहं वसति तोयेषु

Gità. 9. 26. पत्रं पुष्पं फलं तोयम्

## त्मन्

Maitri. 2. 6. सो त्मानमभिध्यात्वा

6. 7. आत्मनो त्मा नेतामृताख्यः

## त्य

Kaush. 1. 6. यद्देवाश्च प्राणाश्च तत्त्यम्

Brih. 1. 3. 24. त्यस्य . . मूर्धानं विपातयनात्

2. 3. 1. द्वे वाव ब्रह्मणो रूपे . . सच्च त्यं च

3. एतदमृतमेतद्यदेतत्त्यम् 5. — एतस्य त्यस्यैष रसः . . त्यस्य ह्येष रसः 5.

3. 9. 9. स ब्रह्म त्यदित्याचक्षते

Tait. 2. 6. 1. सच्च त्यच्चाभवत्

## त्यक्तजीवित

Gîtâ. 1. 9. मदर्थे त्यक्तजीविताः

## त्यक्तसर्वपरिग्रह

Gîtâ. 4. 21. निराशीर्यतचित्तात्मा त्यक्तसर्वपरिग्रहः

## त्यज्

Isâ. 1. तेन त्यक्तेन भुञ्जीथाः
Maitri. 1. 4. महतीं श्रियं त्यक्त्वा
Brahma. 1. यत्परं नापरं त्यजति
2. बहिःसूत्रं त्यजेद्बुधः
— बहिःसूत्रं त्यजेद्विद्वान्
Aruṇeya. 3.
Brahmab. 18. त्यजेद्ग्रन्थमशेषतः
Amrita. 4. मात्रालिङ्गपदं त्यक्त्वा
Nyâsa. 2. त्यक्त्वा कामान् सन्न्यस्यति
— भोगांस्त्यजति सुस्थितान्
Piṇḍa. 2. हंसस्त्यक्त्वा गतो देहम्
Aruṇeya. 3. कामक्रोधलोभमोहदंभदर्पासूयाममत्वाहंकारानृतादीन्यपि त्यजेत्
4. सोपनयनादूर्ध्वमेतानि प्राग्वा त्यजेत्
5. मेखलां यज्ञोपवीतं च त्यक्त्वा
Kâlâg. 2. देहं त्यक्त्वा शिवसायुज्यमेति
Skanda. 11. त्यजेदज्ञाननिर्माल्यम्
Mukti. 2. 15. भोगेच्छां दूरतस्त्यक्त्वा
16. सम्यग्वासनया त्यक्तम्
32. शुभोऽप्यसौ त्वया त्याज्यः
57. त्यक्तपूर्वापरविचारणम्
63. पुनर्जन्मांकुरं त्यक्त्वा
68. मोक्षार्थित्वमपि त्यज
69. त्यक्त्वा विषयवासनाः
Gîtâ. 1. 33. प्राणांस्त्यक्त्वा धनानि च
2. 3. हृदयदौर्बल्यं त्यक्त्वा
48. संगं त्यक्त्वा धनंजय
Gîtâ. 2. 51. फलं त्यक्त्वा मनीषिणः
4. 9. त्यक्त्वा देहं पुनर्जन्म नैति
20. त्यक्त्वा कर्मफलासंगम्
5. 10. संगं त्यक्त्वा करोति यः
11. संगं त्यक्त्वात्मशुद्धये
12. युक्तः कर्मफलं त्यक्त्वा
6. 24. त्यक्त्वा सर्वानशेषतः
8. 6. त्यजत्यन्ते कलेवरम्
13. यः प्रयाति त्यजन्देहम्
16. 21. तस्मादेतत्त्रयं त्यजेत्
18. 3. त्याज्यं दोषवदित्येके
— न त्याज्यमिति चापरे
5. न त्याज्यं कार्यमेव तत्
6. संगं त्यक्त्वा फलानि च
8. कायक्लेशभयात्त्यजेत्
9. संगं त्यक्त्वा फलं चैव
11. नहि..शक्यं त्यक्तुं कर्माण्यशेषतः
48. सदोषमपि न त्यजेत्
51. शब्दादीन्विषयांस्त्यक्त्वा

## त्याग

Mahânâr. 10. 5. त्यागेनैके अमृतत्वमानशुः
Kaivalya. 2.
Prâṇâg. 4. त्यागो दक्षिणा
Parama. 3. त्यागो रागे
Skanda. 12. स्नानं मनोमलत्यागः
Gîtâ. 12. 12. त्यागाच्छान्तिरनन्तरम्
16. 2. त्यागः शान्तिरपैशुनम्
18. 1. त्यागस्य च हृषीकेश
2. सर्वकर्मफलत्यागं प्राहुस्त्यागम्
4. निश्चयं शृणु मे तत्र त्यागे
—त्यागो हि..त्रिविधः
8. स कृत्वा राजसं त्यागम्
9. स त्यागः सात्त्विको मतः

## त्यागफल

Gîtâ. 18. 8. नैव त्यागफलं लभेत्

## त्यागिन्

Aśrama. 4. त्रिदण्डकमण्डलुशिक्यपक्षजलपवित्रपात्रपादुकासनशिखायज्ञोपवीतानां त्यागिनः

Gitâ. 18. 10. त्यागी सत्त्वसमाविष्टः
11. यस्तु कर्मफलत्यागी स त्यागी

## त्रपु

Chhâ. 4. 17. 7. रजतेन त्रपु त्रपुणा सीसम्

## त्रय

Chhâ. 3. 17. 6. अन्तवेलायामेतत्त्रयं प्रतिपद्येत

Bṛih. 1. 6. 1. त्रयं वा इदं नाम रूपं कर्म
3. एतत्त्रयं सदेकमयमात्मात्मो एकः सन्नेतत्त्रयम्
5. 2. 1. त्रयाः प्राजापत्याः प्रजापतौ ..ब्रह्मचर्यमूषुः
3. एतत्त्रयं शिक्षेद्दमं दानं दयाम्

Kaṭha. 1. 18. त्रिणाचिकेतस्त्रयमेतद्विदित्वा

Śwet. 1. 7. तस्मिंस्त्रयं सुप्रतिष्ठाक्षरं च
9. त्रयं यदा विन्दते ब्रह्ममेतत्

Nṛisut. 1. त्रयमप्येतत् सुषुप्तं स्वप्नं मायामात्रम्
— त्रयमत्रापि सुषुप्तं स्वप्नं मायामात्रम्

Mukti. 2. 11. त्रयमेतत्समं यावत्
15. त्रयमेव समाश्रय

Gitâ, 16. 21. तस्मादेतत्त्रयं त्यजेत्

## त्रयस्त्रिंश

Bṛih. 3. 9. 2. इन्द्रश्चैव प्रजापतिश्च त्रयस्त्रिंशाविति

Maitri. 7. 5. त्रिणवत्रयस्त्रिंशौ .. ऊर्ध्वा उद्यान्ति

## त्रयस्त्रिंशत्

Bṛih. 3. 9. 1. कत्येव देवाः .. त्रयस्त्रिंशदिति
2. महिमान एवैषामेते त्रयस्त्रिंशत्त्वेव देवा इति
— कतमे ते त्रयस्त्रिंशदिति

## त्र्याक्षर

Yogat. 6. स्थिताः सर्वे त्र्याक्षरे

## त्रयी

Jâbâla. 4. मोक्षमंत्रस्त्रय्येवं विदेत्

## त्रयीधर्म

Gitâ. 9. 21. एवं त्रयीधर्ममनुप्रपन्नाः

## त्रयी विद्या

Kaush. 2. 6. स एष त्रय्यै विद्याया आत्मा

Chhâ. 1. 1. 9. तेनेयं त्रयी विद्या वर्त्तते
1. 4. 2. देवा वै मृत्योर्बिभ्यतस्त्रयीं विद्यां प्राविशन्
2. 21. 1. त्रयी विद्या हिंकारः
2. 23. 3. तेभ्यो ऽभितप्तेभ्यस्त्रयी विद्या संप्रास्रवत्
4. 17. 3. स एतां त्रयीं विद्यामभ्यतपत्
8. अस्यास्त्रय्या विद्याया वीर्येण

Bṛih. 5. 14. 2. स यावतीयं त्रयी विद्या तावद्ध जयति
6. यावतीयं त्रयी विद्या यस्तावत्प्रतिगृह्णीयात्

Mahânâr. 12. 2. सैषा त्रय्येव विद्या तपति
22. 1. अभयो वै त्रयी विद्या

## त्रयोदश

Chhâ. 1. 13. 3. अनिरुक्तस्त्रयोदशस्तोभः

Mahâ. 1. अहङ्कारस्त्रयोदशः

## त्रयोदशन्

Amṛita. 33. सहस्राणि त्रयोदश

## त्रस

Gauḍa. 4. 42. अजातेस्त्रसतां सदा
43. अजातेस्त्रसतां तेषाम्

## त्राण

Chhâ. 8. 5. 2. सत आत्मनस्त्राणं विन्दते

## त्राणन

Râmap. 12. मननात्त्राणनान्मन्त्रः

## त्रातृ

Mahânâr. 20. 3. त्रातारमिन्द्रमवितारमिन्द्रम्

## त्रि

Ait. 3. 12. तस्य त्रय आवसथास्त्रयः स्वप्नाः

Kaush. 2. 7. कौषीतकेस्त्रीण्युपासनानि भवन्ति

8. एतास्तिस्र ऋचो जपित्वा

Chhâ. 1. 8. 1. त्रयो होद्गीथे कुशला बभूवुः

2. 10. 3. त्रिभिस्त्रिभिः समं भवति

2. 21. 1. त्रय इमे लोकाः स प्रस्तावः

3. यानि पंचधा त्रीणि तेभ्यो न ज्यायः परमन्यदस्ति

2. 23. 1. त्रयो धर्मस्कन्धाः

4. 17. 2. स एतास्तिस्रो देवता अभ्यतपत्

6. 3. 1. त्रीण्येव बीजानि भवन्ति

2. इमास्तिस्रो देवताः 3, 4; 6. 4. 7; 6. 8. 6.

6. 4. 1. त्रीणि रूपाणीत्येव सत्यम् 2, 3, 4.

8. 3. 5. त्रीण्यक्षराणि सतीयमिति

Brih. 1. 3. 22. सम एभिस्त्रिभिर्लोकैः

1. 5. 1. त्रीण्यात्मनेऽकुरुत 3.

4. त्रयो लोका एत एव

5. त्रयो वेदा एत एव

16. अथ त्रयो वाव लोकाः

3. 1. 7. तिसृभिरिति कतमास्तास्तिस्र इति

8. तिस्र इति कतमास्तास्तिस्रः 10.

Brih. 3. 9. 1. त्रयश्च त्री च शता त्रयश्च त्री च सहस्रेति

— कत्येव देवाः..त्रय इति

8. कतमे ते त्रयो देवा इतीम एव त्रयो लोकाः

5. 14. 1. स यावदेषु त्रिषु लोकेषु तावद्ध जयति

6. य इमांस्त्रींल्लोकान् पूर्णान् प्रतिगृह्णीयात्

6. 4. 16. त्रीन् वेदाननुब्रुवीत

Tait. 1. 5. 1. एतास्तिस्रो व्याहृतयः

Katha. 1. 9. तिस्रो रात्रीर्यदवात्सीर्गृहे मे

— तस्मात्प्रति त्रीन् वरान् वृणीष्व

10. एतत्त्रयाणां प्रथमं वरं वृणे

17. त्रिभिरेत्य सन्धिम्

Swet. 6. 3. एकेन द्वाभ्यां त्रिभिरष्टभिर्वा

Maitri. 6. 3. ओमिति तिस्रो मात्राः

10. तिसृष्ववस्थास्वन्तत्वं भवति

7. 11. त्रिष्वेकपाचरेद्ब्रह्म

Mahânâr. 2. 4. त्रीणि पदा निहिता गुहास्तु

9. 4. त्रीणि ज्योतींषि सचते Nṛip. 2. 4.

10. 1. चत्वारि शृङ्गा त्रयो अस्य पादाः

20. 14. त्रीणि पदा विचक्रमे

Prasna. 5. 6. तिस्रो मात्रा मृत्युमत्यः

Kaivalya. 18. त्रिषु धामसु यद्भोग्यम् Gauḍa. 1. 5 (ज्यं)

Gauḍa. 1. 22. त्रिषु धामसु यत्तुल्यम्

4. 27. अध्वसु त्रिषु

90. उपलम्भास्त्रिषु स्मृतः

Nṛip. 1. 3. स त्रींल्लोकान् जयति

2. 2. अष्टाक्षरास्त्रयः पादा भवन्ति

4. यस्योरुषु त्रिषु विक्रमणेष्वधि

4. 2. सूर्य इति त्रीण्यादित्य इति त्रीणि

Nṛisut. 3. विभक्तांस्त्रीनेवाविभक्तांस्त्रीनेव..सम्पूज्य
6. त्रयो देवा उदासते
Brahmav. 4. तत्र देवास्त्रयः प्रोक्ताः..त्रयो ऽग्नयः
— तिस्रो मात्रार्द्धमात्रा च
9. तिस्रो मात्रास्तथा ज्ञेयाः
Kshur. 6. जंघे चैव त्रयस्त्रयः
7. गुदे शिश्ने त्रयस्त्रयः
Siras. 3. तिस्रो मात्राः परस्तु सः
Garbha. 5. त्रीणि स्थानानि भवन्ति
— अस्थीनि च ह वै त्रीणि शतानि षष्टिश्च
Prâṇâg. 1. या ओषधयः सोमराज्ञीरिति तिसृभिः
2. स्त्रियस्तिस्रः
Amṛita. 9. प्राणायामास्त्रयः प्रोक्ताः
28. त्रिभिर्मासैर्न संशयः
Tejo. 4. मुखानि त्रीणि विन्दन्ति
Yogat. 6. त्रयो लोकास्त्रयो वेदास्त्रयः सन्ध्यास्त्रयः सुराः
— त्रयो ऽग्नयो गुणास्त्रीणि
7. त्रयाणामक्षरे प्रान्ते
Kâlâg. 1. त्रिभिः..तिस्रो रेखाः प्रकुर्वीत
Jâbâla. 4. एतयैव त्रयो धातवः (one MS. has एत एव)
Vâsu. 2. ब्रह्मादयस्त्रयो मूर्त्तयः
— तिस्रो व्याहृतयस्त्रीणि छन्दांसि
— त्रयो वेदास्त्रयः स्वरास्त्रयो ऽग्नयो ज्योतिष्मन्तः
— त्रयः कालास्तिस्रो ऽवस्थास्त्रय आत्मानः
— पुण्ड्रास्त्रय ऊर्ध्वाः
4. त्रीणि पदेति मंत्रैः
Râmap. 16. शक्तयस्तिस्र एव च
Mukti. 2. 13. त्रिभिरेतैस्त्रिराभ्यस्तैः
Gîtâ. 3. 22. त्रिषु लोकेषु किञ्चन
7. 13. त्रिभिर्गुणमयैर्भावैः
14. 20. गुणानेतानतीत्य त्रीन्
21. कैर्लिङ्गैस्त्रीन्गुणानेतानतीतो भवति
— त्रीन्गुणानतिवर्त्तते
16. 22. तमोद्वारैस्त्रिभिः
18. 40. एभिः..त्रिभिर्गुणैः

## त्रिंशत्पर्वाङ्गुल

Amṛita. 32. त्रिंशत्पर्वाङ्गुलः प्राणः

## त्रिक

Maitri. 4. 4. अनेन त्रिकेण ब्रह्मोपास्ते

## त्रिकपाल

Kaṭhaśru. 3. वैष्णवं त्रिकपालम्

## त्रिकर्मकृत्

Kaṭha. 1. 17. त्रिकर्मकृत्तरति जन्ममृत्यू

## त्रिकाल

Śwet. 6. 5. परस्त्रिकालादकलो ऽपि दृष्टः
Yogaśi. 8. यदि त्रिकालमावर्त्तेत्

## त्रिकालातीत

Mâṇḍû. 1. यच्चान्यत्त्रिकालातीतं तदप्योङ्कार एव Nṛip. 4. 1; Nṛisut. 1; Râmot. 3.

## त्रिकोणग

Râmap. 50. स्यात्त्रिकोणगं (°कं in Weber's edition.)

## त्रिकोणरूप

Râmap. 29. एवं त्रिकोणरूपं स्यात्

## त्रिगुण

Śwet. 5. 7. विश्वरूपस्त्रिगुणस्त्रिवर्त्मा
Maitri. 6. 10. तस्मात् त्रिगुणं भोज्यम्

Maitri. 6. 10. त्रिगुणभेदपरिणामत्वात्
— पुरुषो ह्यव्यक्तमुखेन त्रिगुणं भुंक्ता इति

Tejo. 6. त्र्यम्बकं त्रिगुणं स्थानम्

## त्रिणव

Maitri. 7. 5. त्रिणवत्रयस्त्रिंशौ . . ऊर्ध्वा उद्यान्ति

## त्रिणाचिकेत

Katha. 1. 17. त्रिणाचिकेतस्त्रिभिरेत्य सन्धिम्
18. त्रिणाचिकेतस्त्रयमेतद्विदित्वा
3. 1. पञ्चाग्नयो ये च त्रिणाचिकेताः

## त्रिदण्ड

Nyâsa. 3. उत्तरासङ्गस्त्रिदण्डः

Âśrama. 4. *vide* धारिन्
— *vide* यज्ञोपवीत

Jâbâla. 6. त्रिदण्डं कमण्डलुं शिक्यम्

## त्रिदण्डिन्

Gopî. 5. एकदण्डी त्रिदण्डी वा

## त्रिदिव

Praśna. 2. 13. त्रिदिवे यत्प्रतिष्ठितम्

## त्रिधा

Chhâ. 7. 26. 2. स एकधा भवति त्रिधा भवति

Maitri. 5. 2. स वा एकस्त्रिधा भूतः
6. 38. द्विस्त्रिधा

Mahânâr. 10. 1. त्रिधा बद्धो वृषभो रोरवीति
2. त्रिधा हितं पणिभिर्गुह्यमानम्

Gauḍa. 1. 1. एक एव त्रिधा स्थितः
2. त्रिधा देहे व्यवस्थितः
3. त्रिधा भोगं निबोधत
4. त्रिधा तृप्तिं निबोधत

Chûl. 15. त्रिधा तं पञ्चधा तथा

Siras. 3. द्विधा त्रिधा बद्धस्त्वम्
6. पृथिवी द्विधा त्रिधर्ता धारिता

Kâlâg. 1. त्रिधा चाललाटात्

Gitâ. 18. 19. त्रिधैव गुणभेदतः

## त्रिधातु

Tejo. 6. त्रिधातु रूपवर्जितम् (so 2 MSS. of text, and Nârâyaṇa; others read त्रिधातुं)

## त्रिधामन्

Tejo. 4. त्रिधामा हंस उच्यते

## त्रिपद्, त्रिपाद्

Chhâ. 3. 12. 6. त्रिपादस्यामृतं दिवि

Bṛih. 5. 14. 7. गायत्र्यस्येकपदी द्विपदी त्रिपदी

Maitri. 6. 4. त्रिपदं त्र्यक्षरम्
— ऊर्ध्वमूलं त्रिपाद्ब्रह्म
7. 11. त्रिपाच्चरति चोत्तरे

## त्रिपुण्ड्र

Kâlâg. 1. अधीहि भगवंस्त्रिपुण्ड्रविधिसतत्त्वम्
2. इति त्रिपुण्ड्रं भस्मना करोति

## त्रिपुरा

Mukti. 1. 37. त्रिपुरा कठभावना
1. *vide* बह्वृच

## त्रिपुरातपन

Mukti. 1. 37. त्रिपुरातपनं देवी
1. *vide* गारुड

## त्रिब्रह्मन्

Dhyâna. 17. त्रिब्रह्म च त्रिरक्षरम्

## त्रिमल

Garbha. 1. तत् सप्तधातु त्रिमलं द्वियो-
निम्

## त्रिमात्र

Praśna. 5. 5. त्रिमात्रेणैवोमित्येतेनैवाक्ष-
रेण

Amṛita. 30. आग्नेयस्तु त्रिमात्राणि

Dhyâna. 17. त्रिमात्रं चार्द्धमात्रं च

Haṁsa. 1. त्रिमात्रो ऽहमित्येव सर्वदा
ध्यायन्

## त्रिमार्ग

Dhyâna. 17. त्रिस्थानं च त्रिमार्गं च

## त्रिमार्गभेद

Śwet. 1. 4. त्रिमार्गभेदं द्विनिमित्तैकमो-
हम्

## त्रिरक्षर

Dhyâna. 17. त्रिब्रह्म च त्रिरक्षरम्

## त्रिरात्र

Bṛih. 6. 4. 13. त्रिरात्रान्त आप्लुत्य

## त्रिरात्रम्

Aśrama. 1. उपनयनादूर्ध्वं त्रिरात्रम्

## त्रिरूप

Nṛisnt. 9. त्रिरूप ईश्वरवत्

## त्रिरेखापुट

Râmap. 58. त्रिरेखापुटमालिख्य

## त्रिलोचन

Kaivalya. 7. त्रिलोचनं नीलकण्ठं प्रशा-
न्तम्

Dhyâna. 13. ललाटस्थं त्रिलोचनम्

## त्रिवर्त्मन्

Śwet. 5. 7. विश्वरूपस्त्रिगुणस्त्रिवर्त्मा
(Nârâyaṇa reads त्रिवर्त्म)

## त्रिवारम्

Vâsu. 2. त्रिवारमभिमंत्र्य

## त्रिविध

Swet. 1. 12. सर्वं प्रोक्तं त्रिविधं ब्रह्ममेतत्

Gauḍa. 3. 16. आश्रमास्त्रिविधाः

4. 89. ज्ञाने च त्रिविधे ज्ञेये

Krish. 5. माया सा त्रिविधा प्रोक्ता

Gitâ. 16. 21. त्रिविधं नरकस्येदं द्वारम्

17. 2. त्रिविधा भवति श्रद्धा

7. त्रिविधो भवति प्रियः

17. तपस्तत्त्रिविधम्

23. निर्देशः..त्रिविधः स्मृतः

18. 4. त्यागो हि..त्रिविधः सम्प्र-
कीर्त्तितः

12. त्रिविधं कर्मणः फलम्

18. त्रिविधा कर्मचोदना

— त्रिविधः कर्मसंग्रहः

29. गुणतस्त्रिविधं शृणु

36. सुखं त्विदानीं त्रिविधम्

## त्रिविष्टप

Nyâsa. 4. त्रिविष्टपमुपानहौ
Kaṭhaśru. 4.

## त्रिवृत्

Chhâ. 6. 3. 3. तासां त्रिवृतं त्रिवृतमेकैकां
करवाणि

4. तासां त्रिवृतं त्रिवृतमेकै-
कामकरोत्

— त्रिवृत्त्रिवृदेकैका भवति
6. 4. 7; 6. 8. 6.

Śwet. 1. 4. तमेकनेमिं त्रिवृतम्

Maitri. 7. 1. गायत्रं त्रिवृद्रथन्तरं..पु-
रस्तादुद्यन्ति

## त्रिवृत्सूत्र

Brahma. 2. त्रिवृत्सूत्रं च यन्महत्

Aruṇeya. 3. त्रिवृत्सूत्रं त्यजेद्विद्वान्
(*vide* बहिःसूत्र)

## त्रिशक्ति

Kâlâg. 1. ऽयायुर्वैश्चर्यंबकैस्त्रिशक्तिभिः

## त्रिशंकु

Tait. 1. 10. 1. इति त्रिशङ्कोर्वेदानुवचनम्

## त्रिशरीर

Nṛisut. 1. तस्मिन्निदं सर्वं त्रिशरीरमारोप्य
— एतं त्रिशरीरमात्मानं त्रिशरीरं परं ब्रह्मानुसन्दध्यात्

## त्रिशिखी

Mukti. 1. 34. परिव्राट् त्रिशिखी सीता

## त्रिशिखीब्राह्मण

Mukti. 1. *vide* मुक्तिका

## त्रिशीर्षन्

Kaush. 3. 1. त्रिशीर्षाणं त्वाष्ट्रमहनम्

## त्रिष्टुभ्

Chhâ. 3. 16. 3. चतुश्चत्वारिंशदक्षरा त्रिष्टुप्
Maitri. 7. 2. इन्द्रस्त्रिष्टुप् पञ्चदशः . . दक्षिणत उद्यान्ति
Nṛip. 2. 1. विष्णुरुद्रास्त्रिष्टुब्दक्षिणाग्निः Nṛisut. 3.
Śiras. 1. त्रिष्टुब्जगत्यनुष्टुप् चाहम्
Sikhâ. 1. रुद्रो रुद्रास्त्रिष्टुब्दक्षिणाग्निः

## त्रिस्

Kaush. 2. 7. त्रिः प्रसिच्योदपात्रम्
11. त्रिरस्य मूर्धानमभिजिघ्रेत्
— त्रिरस्य मूर्धानमभिहिंकुर्यात्
Bṛih. 6. 4. 19. तेनैनां त्रिरभ्युक्षति
21. त्रिरेनामनुलोमामनुमार्ष्टि
25. वाग्वागिति त्रिः
Śwet. 2. 8. त्रिरुन्नतं स्थाप्य समं शरीरम्
Śikhâ. 1. ओमोमोमिति त्रिरुक्तः
Amṛita. 10. त्रिः पठेदायतप्राणः
Haṁsa. 1. स्वाधिष्ठानं त्रिः प्रदक्षिणीकृत्य
Aruṇeya. 4. सन्न्यस्तं मया सन्न्यस्तं मया सन्न्यस्तं मयेति त्रिःकृत्वा

## त्रिसन्ध्यादि

Aruṇeya. 2. त्रिसन्ध्यादौ स्नानमाचरेत्

## त्रिसुपर्ण

Mahânâr. 17. 6. त्रिसुपर्णमयाचितं ब्राह्मणाय दद्यात्
— ये ब्राह्मणास्त्रिसुपर्णं पठन्ति 7, 8.
7. य इमं त्रिसुपर्णमयाचितं ब्राह्मणाय दद्यात् 8.

## त्रिसूत्र

Maitri. 6. 35. त्रिसूत्रमणुमव्ययम्
Chûl. 1. त्रिसूत्रं मणिमव्ययम्

## त्रिस्थान

Dhyâna. 17. त्रिस्थानं च त्रिमार्गं च

## त्रिस्थूण

Yogaśi. 4. त्रिस्थूणे पञ्चदैवते

## त्रेता

Muṇḍ 1. 2. 1 तानि त्रेतायां बहुधा सन्ततानि

## त्रेधा

Chhâ. 6. 5. 1. अन्नमशितं त्रेधा विधीयते
2. आपः पीतास्त्रेधा विधीयन्ते
3. तेजो ऽशितं त्रेधा विधीयते
Bṛih. 1. 2. 3. स त्रेधात्मानं व्यकुरुत Maitri. 6. 3.
— स एष प्राणस्त्रेधा विहितः
Maitri. 6. 37. अपरिमितं तेजस्तत् त्रेधाभिहितम्

Maitri. 7. 11. परं तेजस्त्रेधाभिहितम्

Krish. 6. माया त्रेधा ह्युदाहृता (Nârâyaṇa has त्रिधा)

## त्रै

Chhâ. 3. 12. 1. वाग्वा इदं सर्वं भूतं गायति च त्रायते च

Bṛih. 5. 13. 4. त्रायते हैनं प्राणः क्षणितोः

5. 14. 4. एषा गयांस्तत्रे प्राणा वै गयास्तत्प्राणांस्तत्रे . . गयांस्तत्रे तस्माद्गायत्री नाम

— यस्मा अन्वाह तस्य प्राणांस्त्रायते

Śiras. 4. गर्भजन्मव्याधिजरामरणसंसारमहाभयात्तारयति त्रायते च

Gîtâ. 2. 40. त्रायते महतो भयात्

## त्रैगुण्यविषय

Gîtâ. 2. 45. त्रैगुण्यविषया वेदाः

## त्रैधातवी

Jâbâla. 4. त्रैधातवीमेव कुर्यात् (so Saṁkarânanda and 3 MSS. of the text; but Nârâyaṇa reads त्रैधातवीयामेव with 3 other MSS. of text).

## त्रैलोक्य

Râmot. 5. यो वै श्रीरामः . . यच्च त्रैलोक्यम् (26)

Gîtâ. 1. 35. अपि त्रैलोक्यराज्यस्य हेतोः

## त्रैवणि

Bṛih. 2. 6. 3. आसुरायणस्त्रैवणेः 4.6. 3.

— त्रैवणिरौपजन्धनेः 4. 6. 3.

## त्रैविद्य adj.

Gîtâ. 9. 20. त्रैविद्या मां सोमपाः पूतपापाः

## त्रैविध्य

Nṛisut. 9. तस्मादात्मन एव त्रैविध्यम्

## त्रैष्टुभ

Chhâ. 3. 16. 3. त्रैष्टुभं माध्यन्दिनं सवनम्

Mahâ. 3. त्रैष्टुभं छन्दो यजुर्वेदः

## त्र्यक्ष

Mahâ. 2. त्र्यक्षः शूलपाणिः पुरुषः (Saṁkarânanda reads त्र्यक्षशूलपाणिपुरुषः)

## त्र्यक्षर

Chhâ. 2. 10. 1. हिंकार इति त्र्यक्षरं प्रस्ताव इति त्र्यक्षरं तत्समम्

3. उद्गीथ इति त्र्यक्षरम्

— अक्षरमतिशिष्यते त्र्यक्षरं तत्समम्

4. निधनमिति त्र्यक्षरम्

Bṛih. 5. 3. 1. एतत् त्र्यक्षरं हृदयमिति

5. 5. 1. एतत् त्र्यक्षरं सत्यमिति

Maitri. 6. 4. त्रिपदं त्र्यक्षरम्

Brahmav. 4. त्र्यक्षरस्य शिवस्य च

Atmapra. 1. इति त्र्यक्षरं प्रणवं तदेतदोमिति

Gopi. 3. चन्दनं तु त्रियक्षरम्

## त्र्यणुक

Maitri. 7. 11. जिह्वाग्रदेशे त्र्यणुकं च विद्धि

## त्र्यम्बक

Tejo. 6. त्र्यम्बकं त्रिगुणं स्थानम्

Kâlâg. 1. त्र्यम्बकं यजामहे

— त्र्यायुषैस्त्र्यंबकैस्त्रिशक्तिभिः

## त्र्यस्र

Râmap. 52. त्र्यस्रं पुनर्भवेत्

## त्र्यहम्

Bṛih. 6. 4. 13. त्र्यहं कंसे न पिबेत्

## ऽयायुष

Kâlâg. 1. त्रिभिरुयायैरुयंबकैस्त्रिशाक्तिभिः

## त्वच्

Ait. 1. 4. त्वङ्निरभिद्यत त्वचो लोमानि

2. 4. ओषधिवनस्पतयो लोमानि भूत्वा त्वचं प्राविशन्

3. 7. तत्त्वचाजिघृक्षत्तन्नाशक्नोत्त्वचा महीतुं स यद्धैनत्त्वचाग्रहैष्यत्

11. यदि त्वचा स्पृष्टं . . को ऽहम्

Chhâ 2. 19. 1. त्वक् प्रस्तावः

Bṛih. 2. 4. 11. सर्वेषां स्पर्शानां त्वगेकायनम् 4. 5. 12.

3. 2. 9. त्वग्वै ग्रहः . . त्वचा हि स्पर्शान् वेदयते

3. 7. 21. यस्त्वचि तिष्ठंस्त्वचो ऽन्तरो यं त्वङ् न वेद यस्य त्वक् शरीरं यस्त्वचमन्तरो यमयति

3. 9. 28. त्वगस्योत्पाटिका बहिः

— त्वच एवास्य रुधिरं प्रस्पन्दि त्वच उत्पटः

Tait. 1. 7. 1. चक्षुः श्रोत्रं मनो वाक्त्वक्

Praśna. 4. 8. त्वक् च स्पर्शयितव्यं च

5. 5. यथा पादोदरस्त्वचा विनिर्मुच्यते

Garbha. 1. त्वक् स्पर्शो

Nyâsa. 5. न त्वचं न स्पर्शयेत्

Piṇḍa. 4. मांसत्वक्शोणितोद्भवः

Râmap. 77. सप्रतिष्ठा ह्लादिनी त्वक्

Gîtâ. 1. 30. त्वक् चैव परिदह्यते

## त्वंपदार्थ

Sarvop. 3. तदा त्वंपदार्थः प्रत्यगात्मेत्युच्यते

4. त्वंपदार्थादौपाधिकात् . . विलक्षणः

## त्वर्

Gîtâ. 11. 27. वक्त्राणि ते त्वरमाणा विशन्ति

## त्वष्टृ

Bṛih. 6. 4. 21. त्वष्टा रूपाणि पिंशतु

Kaṭhaśru. 2. त्वं त्वष्टा त्वं प्रतिष्ठासि

— अहं त्वष्टाहं प्रतिष्ठास्मि

## त्वादृश्

Kaṭha. 1. 22. वक्ता चास्य त्वादृगन्यो न लभ्यः

2. 9. त्वादृङ् नो भूयान्नचिकेतः प्रष्टा

## त्वाष्ट्र

Kaush. 3. 1. त्रिशीर्षाणं त्वाष्ट्रमहनम्

Bṛih. 2. 5. 17. त्वाष्ट्रं यद्दस्रावपि कक्ष्यम्

2. 6. 3. अयास्य आङ्गिरस आभूतेस्त्वाष्ट्रात् 4. 6. 3.

— आभूतिस्त्वाष्ट्रो विश्वरूपात्त्वाष्ट्रात् 4. 6. 3.

— विश्वरूपस्त्वाष्ट्रो ऽश्विभ्याम् 4. 6. 3.

## थम्

Chhâ. 1. 3. 6. अन्नं थमन्ने हीदं सर्वं स्थितम्

7. पृथिवी थं . . अग्निस्थं . . ऋग्वेदस्थम्

## द

Bṛih. 5. 2. 1. तेभ्यो हैतदक्षरमुवाच द इति 2, 3.
3. एषा दैवी वागनुवदति स्तनयित्नुर्ददद इति
5. 3. 1. द इत्येकमक्षरम्

## दंश्

Gâruḍa. 3. द्वादशवर्षं न तं दशन्ति सर्पाः
— यावज्जीवं न तं दशन्ति सर्पाः

## दंश

Chhâ. 6. 9. 3. दंशो वा मशको वा 6. 10. 2.
Maitri. 1. 4. यथेमे दंशमशकादयः

## दंष्ट्राकराल

Gîtâ. 11. 25. दंष्ट्राकरालानि च ते मुखानि
27. दंष्ट्राकरालानि भयानकानि

## दंसस्

Bṛih. 2. 5. 16. दंस उग्रमाविष्कृणोमि

## दक्ष

Râmap. 22. दक्षवामयोः स्तनयोः
Gîtâ. 12. 16. अनपेक्षः शुचिर्दक्षः

## दक्षिण

Kaush. 2. 3. दक्षिणं जान्वाच्य
8. इति दक्षिणं बाहुमन्वावर्त्तते 9.
11. अथास्य दक्षिणे कर्णे जपति
13. यदि . . पर्वतावभिवर्त्तेयातां दक्षिणश्चोत्तरश्च
4. 2. दक्षिणे ऽक्षिणि वाचः
17. दक्षिणे ऽक्षिणि पुरुषस्तमेवाहमुपासे
Chhâ. 3. 2. 1. ये ऽस्य दक्षिणा रश्मयस्ता एवास्य दक्षिणा मधुनाड्यः
Chhâ. 3. 13. 2. दक्षिणः सुषिः स व्यानः
3. 15. 2. सहमाना नाम दक्षिणा
4. 5. 2. दक्षिणा दिक् कला
Bṛih. 1. 2. 3. दक्षिणा चोदीची च पार्श्वे
2. 3. 5. यो ऽयं दक्षिणे ऽक्षन्पुरुषः 4. 2. 2; 5. 5. 2, 4.
3. 9. 21. किंदेवतो ऽस्यां दक्षिणायां दिश्यसि
4. 2. 4. दक्षिणा दिग्दक्षिणे प्राणाः
6. 4. 25. अथास्य दक्षिणं कर्णमभिनिधाय
Tait. 2. 1. 1. अयं दक्षिणः पक्षः
2. 2. 1. व्यानो दक्षिणः पक्षः
2. 3. 1. ऋग्दक्षिणः पक्षः
2. 4. 1. ऋतं दक्षिणः पक्षः
2. 5. 1. मोदो दक्षिणः पक्षः
Swet. 4. 21. यत्ते दक्षिणं मुखम्
Maitri. 7. 11. यो ऽयं दक्षिणे ऽक्षिण्यवस्थितः
Mahânâr. 25. 1. दक्षिणा वाग्घोता
— यो दक्षिणे प्रमीयते
Praśna. 1. 6. यद्दक्षिणां . . प्रकाशयति
9. तस्यायने दक्षिणं चोत्तरं च
— दक्षिणं प्रतिपद्यन्ते
Kshur. 16. पिङ्गला दक्षिणेन तु
Śiras. 4. दक्षिणाः प्रत्यञ्चः . . अभिव्रजन्त्येके
Nâda. 1. अकारो दक्षिणः पक्षः
2. धर्मश्च दक्षिणं चक्षुः
Râmap. 28. दक्षिणे लक्ष्मणेनाथ
50. उदग्दक्षिणयोः स्वस्य
Râmot. 4. मुमूर्षोर्दक्षिणे कर्णे
Mukti. 1. 21. जन्तोर्दक्षिणकर्णे तु

## दक्षिणतस्

Chhâ. 3. 7. 4. द्विस्तावद्दक्षिणत उदेता
3. 8. 4. यावदादित्यो दक्षिणत उदेता

Chhâ. 3. 9. 4. दक्षिणतो ऽस्तमेता 3. 10. 4.
7. 25. 1. स दक्षिणतः . . अहं दक्षिणतः
2. आत्मा दक्षिणतः
Bṛih. 3. 1. 9. ब्रह्मा यज्ञं दक्षिणतः . . गोपायति
Maitri. 6. 17. प्रागनन्तो दक्षिणतो ऽनन्तः
7. 2. दक्षिणत उद्यन्ति
Muṇḍ. 2. 2. 11. ब्रह्म दक्षिणतश्चोत्तरेण
Nṛip. 5. 2. रुद्रा दक्षिणतः
Śiras. 3. दक्षिणतः पादौ

## दक्षिणहस्त

Prâṇâg. 4. दक्षिणहस्तः स्रुवः

## 1. दक्षिणा

Chhâ. 3. 17. 4. ता अस्य दक्षिणाः
Bṛih. 3. 9. 21. कस्मिन्नु यज्ञः प्रतिष्ठित इति दक्षिणायामिति कस्मिन्नु दक्षिणा प्रतिष्ठिता
— यदा श्रद्धत्ते ऽथ दक्षिणां ददाति श्रद्धायां दक्षिणा प्रतिष्ठिता
Kaṭha. 1. 2. दक्षिणासु नीयमानासु
Muṇḍ. 2. 1. 6. तस्मात् . . क्रतवो दक्षिणाश्च
Mahânâr. 22. 1. यज्ञानां वरूथं दक्षिणा
Nṛip. 5. 2. दक्षिणार्थं तावत् कल्पते
— यां काञ्चिद्दद्यात् सा दक्षिणा भवति
Prâṇâg. 3. शारीरयज्ञस्य . . का दक्षिणा
4. त्यागो दक्षिणा
Mukti. 1. 34. दक्षिणा शरभं स्कन्दम्

## 2. दक्षिणा adv.

Chhâ. 5. 10. 3. यान् षड् दक्षिणैति मासान्
Bṛih. 6. 2. 16. यान् षण्मासान् दक्षिणादित्य एति

## दक्षिणाक्षिमुख

Gauḍa. 1. 2. दक्षिणाक्षिमुखे विश्वः

## दक्षिणाग्नि

Chhâ. 4. 17. 5. दक्षिणाग्नौ जुहुयात्
Maitri. 6. 5. गार्हपत्यो दक्षिणाग्निराहवनीया इति मुखवत्येषा
34. अन्तरिक्षं दक्षिणाग्निः
Nṛip. 2. 1. विष्णुरुद्रास्त्रिष्टुब्दक्षिणाग्निः Nṛisut. 3.
Brahmav. 6. दक्षिणाग्निस्तथैव च
Śiras. 1. गार्हपत्यो दक्षिणाग्निराहवनीयो ऽहम्
Sikhâ. 1. रुद्रोरुद्रास्त्रिष्टुब्दक्षिणाग्निः
Garbha. 5. हृदि दक्षिणाग्निः
Prâṇâg. 1. एकां दक्षिणाग्नौ (जुहोति)
2. दक्षिणाग्निर्भूत्वा हृदये तिष्ठति
Kaṭhaśru. 3. इत्येवं दक्षिणाग्निम्
Kâlâg. 2. द्वितीया रेखा सा च दक्षिणाग्निः

## दक्षिणाञ्च्

Śiras. 1. दक्षिणाञ्च उदञ्चो ऽहम्

## दक्षिणामुख

Mahâ. 3. दक्षिणामुखो भूत्वा

## दक्षिणामूर्त्ति

Mukti. 1. *vide* सरस्वतीरहस्य

## दक्षिणावृत्

Kaush. 2. 15. अथ दक्षिणावृदुपनिष्क्रामति

## दग्धेन्धन

Śwet. 6. 19. दग्धेन्धनमिवानलम्

## दण्ड

Śwet. 4. 3. त्वं जीर्णो दण्डेन वञ्चसि
Parama. 1. कौपीनं दण्डमाच्छादनं च . . परिग्रहेत्

Parama. 2. न दण्डं न कमण्डलुं न शिखाम्

Aruṇeya. 1. दण्डमाच्छादनं च कौपीनं च परिग्रहेत्

2. दण्डाँल्लोकांश्च विसृजेत्

4. वैणवं दण्डं . . परिग्रहेत्

5. पालाशं बैल्वमौदुंबरं दण्डम्

Gîtâ. 10. 38. दण्डो दमयतामस्मि

## दत्तात्रेय

Jâbâla. 6. *vide* प्रभृति

Mukti. 1. 39. दत्तात्रेयं च गारुडम्

1. *vide* गारुड

## ददापयितृ

Mahânâr.20. 24. देहि देहि ददापयिता

## दधि

Chhâ. 5. 2. 4. दधिमधुनोरुपमथ्य

6. 6. 1. दध्नः सोम्य मथ्यमानस्य

Bṛih. 6. 3. 13. तान् पिष्टान् दधनि . . उपसिञ्चति

6. 4. 25. दधि मधु घृतं सन्नीय

Śwet. 1. 15. दधिनीव सर्पिः Brahma. 3. (4 MSS. have दध°)

## दध्यञ्च्

Bṛih. 2. 5. 16. दध्यङ्ङाथर्वणः 17, 18, 19.

17. आथर्वणाय . . दधीचे

2. 6. 3. अश्विनौ दधीच आथर्वणात्

4. 6. 3.

— दध्यङ्ङाथर्वणो ऽथर्वणो दैवात् 4. 6. 3.

## दध्योदन

Bṛih. 6. 4. 15. दध्योदनं पाचयित्वा

## दन्त

Garbha. 5. षोडश पार्श्वदन्तौष्ठपटलानि

Prâṇâg. 4. दन्तोष्ठौ सृक्कवाकः

Mukti. 2. 42. दन्तैर्दन्तान्विचूर्ण्य च

## दन्तिन्

Mahânâr. 3. 4. तन्नो दन्ती प्रचोदयात्

## दन्दशूक

Bṛih. 6. 2. 16. ते कीटाः पतङ्गा यदिदं दन्दशूकम्

## दभ्र

Kena. 9. दभ्रमेवापि नूनं त्वं वेत्थ ब्रह्मणो रूपम्

## दम्

Bṛih. 4. 4. 23. शान्तो दान्त उपरतः

5. 2. 1. दाम्यतेति न आत्थेति

3. ददद इति दाम्यत दत्त दयध्वमिति

Mahânâr. 22. 1. दमेन दान्ताः किल्विषमवधून्वन्ति

Nṛisut. 6. शान्ता दान्ता उपरताः

Haṁsa. 1. शान्ताय दान्ताय गुरुभक्ताय

Gîtâ. 10. 30. दण्डो दमयतामस्मि

## दम

Kena. 33. तस्यै तपो दमः कर्मेति प्रतिष्ठा

Bṛih. 5. 2. 3. एतत्त्रयं शिक्षेद्दमं दानं दयामिति

Tait. 1. 9. 1. दमश्च स्वाध्यायप्रवचने च

Mahânâr. 21. 2. दम इति नियतं ब्रह्मचारिणस्तस्माद्दमे रमन्ते

22. 1. दमेन दान्ताः किल्विषमवधून्वन्ति &c.

25. 1. दमः शमयिता

Gaṇḍa. 4. 36. दमः प्रकृतिदान्तत्वात्

Kṛish. 17. सत्याक्रूरो दमोद्भवः

Gîtâ. 10. 4. क्षमा सत्यं दमः शमः

Gità. 16. 1. दानं दमश्च यज्ञश्च
18. 42. शमो दमस्तपः शौचम्

## दमाय

Tait. 1. 4. 2. दमायन्तु ब्रह्मचारिणः

## दम्भ

Parama. 2. *vide* आदि
Aruṇeya. 3. ditto.
Gità. 16. 4. दम्भो दर्पो ऽभिमानश्च
10. दम्भमानमदान्विताः
17. दम्भेनाविधिपूर्वकम्
17. 5. दम्भाहंकारसंयुक्ताः
12. दम्भार्थमपि चैव यत्
18. तपो दम्भेन चैव यत्

## दय्

Bṛih. 5. 2. 3. दयध्वमिति न आत्थेति
— ददद इति दाम्यत दत्त दयध्वमिति

## दया

Bṛih. 5. 2. 3. एतत्त्रयं शिक्षेद्दमं दानं दयामिति
Prâṇâg. 4. स्मृतिर्दया क्षान्तिरहिंसा पत्नीसंयाजाः
Kṛish. 16. दया सा रोहिणी माता
Gitâ. 16. 2. दया भूतेष्वलोलत्वम्

## दयासमुद्र

Mukti. 1. दयासमुद्रं सद्गुरुम्

## दर्प

Tejo. 12. लोभं मोहं भयं दर्पम्
Parama. 2. *vide* आदि
Aruṇeya. 3. ditto.
Kṛish. 16. दर्पः कुवलयापीडः
Gitâ. 16. 4. दम्भो दर्पो ऽभिमानश्च
18. अहंकारं बलं दर्पम् 18. 53.

## दर्भ

Garbha. 5. शिरः कपालं केशा दर्भाः
Prâṇâg. 3. शारीरयज्ञस्य..के दर्भाः
4. केशा दर्भाः

## दर्वी

Bṛih. 3. 8. 9. दर्वीं पितरो ऽन्वायत्ताः
Mukti. 2. 65. दर्वी पाकरसं यथा

## दर्श

Kaṭhaśru. 3. यद्दर्शे तद्दर्शे

## दर्शत

Bṛih. 5. 14. 3. अस्या एतदेव तुरीयं दर्शतं पदम् 6.
— दर्शतं पदमिति ददृश इव
4. सैषा गायत्र्येतस्मिंस्तुरीये दर्शते पदे..प्रतिष्ठिता
7. नमस्ते तुरीयाय दर्शताय पदाय

## दर्शन

Chhâ. 8. 3. 1. न तमिह दर्शनाय लभते
8. 12. 4. दर्शनाय चक्षुः
Bṛih. 2. 4. 5. आत्मनो वा अरे दर्शनेन
Gauḍa. 4. 25. इष्यते युक्तिदर्शनात्
33. भूतानां दर्शनं कुतः
34. न युक्तं दर्शनम्
36. अनस्य दर्शनात्
Garbha. 5. दर्शनाग्नी रूपाणां दर्शनं करोति
Skanda. 11. अभेददर्शनं ज्ञानम्
Mukti. 1. 38. रुद्राक्षगणदर्शनम्
2. 64. दर्शनादर्शने हित्वा
Gitâ. 13. 11. तत्त्वज्ञानार्थदर्शनम्

## दर्शनकांक्षिन्

Gitâ. 11. 52. नित्यं दर्शनकांक्षिणः

## दर्शनाग्नि

Garbha. 5. ज्ञानाग्निर्दर्शनाग्निः कोष्ठाग्निः
— दर्शनाग्नी रूपाणां दर्शनं करोति
Prâṇâg. 2. दर्शनाग्निर्नाम चतुराकृतिः

## दर्शपूर्णमास

Brih. 1. 5. 2. अथो आहुर्दर्शपूर्णमासाविति
Mahânâr. 25. 1. ये अहोरात्रे ते दर्शपूर्णमासौ

## दर्शित्व

Mukti. 2. शरीरनाशदर्शित्वात्

## दल

Râmap. 67. दलेषु द्वादशाक्षरम्

## दलसंस्थ

Maitri. 6. 2. अस्येमाश्चतस्रो दिशश्चतस्र उपदिशो दलसंस्थाः

## दशन्

Kaush. 3. 8. ता वा एता दशैव भूतमात्रा अधिप्रज्ञं दश प्रज्ञामात्रा अधिभूतम्
Chhâ. 4. 3. 8. एते पञ्चान्ये पञ्चान्ये दश सन्तस्तत्कृतम्
— सर्वासु दिक्ष्वन्नमेव दश कृतम्
5. 9. 1. गर्भो दश वा मासानन्तः शयित्वा
7. 9. 1. यद्यपि दशरात्रीर्नाश्नीयात्
7. 26. 2. दश चैकं च
Brih. 2. 5. 19. युक्ता ह्यस्य हरयः शता दश
— अयं वै दश च सहस्राणि
3. 1. 1. दश दश पादा एकैकस्याः शृङ्गयोः
3. 9. 4. दशेमे पुरुषे प्राणाः
6. 3. 13. दश ग्राम्याणि धान्यानि भवन्ति
Ganda. 4. 63. दिक्षु वै दशसु स्थितान् 65.
Mahâ. 1. दशेन्द्रियाणि
Râmap. 8. दश द्वादश षोडश
56. दशभिस्त्वेभिरावृतः
Gîtâ. 13. 5. इन्द्रियाणि दशैकं च

## दशन

Nyâsa. 5. सन्दश्य दशनैर्जिह्वाम्

## दशनान्तर

Gîtâ. 11. 27. केचिद्विलग्ना दशनान्तरेषु

## दशम

Brih. 6. 4. 22. दशमे मासि सूतवे
Nrip. 2. 3. नमामि दशमं ( स्थानं जानीयात् )
Nâda. 11. ध्रुवेति दशमी मता
16. दशम्यां च ध्रुवं व्रजेत्
Pinda. 8. दशमेन तु पिण्डेन
Haṁsa. 2. दशमो मेघनादः
— नवमं परित्यज्य दशममेवाभ्यसेत्
— दशमं परमं ब्रह्म भवेत्
Gopî. 5. पुनात्यादशमं कुलम्

## दशरथ

Râmap. 1. जाते दशरथे हरौ

## दशविध

Garbha. 1. इष्टानिष्टानि ... दशविधा भवन्ति
Haṁsa. 2. नादो दशविधो जायते

## दशसंख्यक

Mukti. 1. दशसंख्यकानामुपनिषदाम्

## दशाङ्गुल

Swet. 3. 14. अत्यतिष्ठद्दशाङ्गुलम्

## दशास्यान्तक

Râmap. 32. दशास्यान्तकरूपिणे
33. भो दशास्यान्तक

## दशोपनिषद्

Mukti. 1. 27. दशोपनिषदं पठ

## दस्र

Bṛih. 2. 5. 17. त्वाष्ट्रं यद्दस्रावपि कक्ष्यम्

## दह्

Kena. 18. इदं सर्वं दहेयम्
19. एतद्दहेति..न शशाक दग्धुम्

Chhâ. 6. 7. 3. तेन ततो ऽपि न बहु दहेत्
5. तेन ततोऽपि बहु दहेत्
6. 16. 1. स दह्यते ऽथ हन्यते
2. स न दह्यते ऽथ मुच्यते
3. स यथा तत्र न दाह्येत

Kaivalya. 11. पाशं दहति पण्डितः

Nṛip. 3. 1. सर्वं पाप्मानं दहति
5. 10. यत्र नाग्निर्दहति

Nṛisut. 2. यथा दाह्यं दग्ध्वाग्निः

Kshur. 23. दीपो दग्ध्वा लयं व्रजेत्
— कर्माणि..दग्ध्वा लयं व्रजेत्

Garbha. 4. एकाकी तेन दह्ये ऽहम्

Amṛita. 7. यथा पर्वतधातूनां दह्यन्ते धमनान्मलाः
— तथेन्द्रियकृता दोषा दह्यन्ते
8. प्राणायामैर्दहेद्दोषान्

Haṁsa. 2. दग्धे पुण्यपापे

Râmap. 44. पुरं दग्ध्वा तथा स्वयम्

Gitâ. 2. 23. नैनं दहति पावकः
4. 19. ज्ञानाग्निदग्धकर्माणम्

## दहर

Chhâ. 8. 1. 1. ब्रह्मपुरे दहरं पुण्डरीकं वेश्म दहरो ऽस्मिन्नन्तराकाशः 2.

Mahânâr. 10. 7. दह्रं विपाप्मं वरं वेश्मभूतं ..तत्रापि दह्रं गगनम्

Kshur. 10. दहरं पुण्डरीकेति

## दा (ददाति)

Kaush. 1. 1. यन्नः परे ददाति
2. 1. नाहमतो दत्तमश्नीयाम् 2.
— एनमुपमंत्रयन्ते ददाम त इति 2.
4. 1. सहस्रं दद्म इत्येतस्यां वाचि

Chhâ. 1. 10. 3. एतेषां मे देहीति
1. 11. 3. यावत्त्वेभ्यो धनं दद्यास्तावन् मम दद्याः
2. 22. 5. इन्द्रे बलं ददानीति
3. 11. 6. यद्यप्यस्मा इमां...धनस्य पूर्णां दद्यात्
4. 3. 5. तस्मा उ ह न ददतुः
6. यस्मै वा एतदन्नं तस्मा एतन्न दत्तमिति
7. दत्तास्मै भिक्षामिति
8. तस्मा उ ह ददुः
5. 10. 3. दत्तमित्युपासते
5. 11. 5. यावदेकैकस्मा ऋत्विजे धनं दास्यामि तावद्भगवद्भ्यो दास्यामि
7. 15. 1. प्राणः प्राणं ददाति प्राणाय ददाति

Bṛih. 1. 4. 16. यदेभ्यो ऽशनं ददाति
2. 1. 1. सहस्रमेतस्यां वाचि दद्मः
3. 8. 9. ददतो मनुष्याः प्रशंसन्ति
3. 9. 21. यदा ह्येव श्रद्धत्ते ऽथ दक्षिणां ददाति
4. 1. 2. हस्त्यृषभं सहस्रं ददामीति
4. 3. 1. तस्मै ह याज्ञवल्क्यो वरं ददौ..कामप्रश्नं वव्रे तं हास्मै ददौ
14. सो ऽहं भगवते सहस्रं ददामि 15, 16, 33; 4. 4. 7.
4. 4. 23. सो ऽहं भगवते विदेहान्ददामि
5. 2. 2. दत्तेति न आत्थेति
3. दद्द इति दाम्यत दत्त दयध्वमिति

Brih. 5. 3. 1. ददत्यस्मै स्वाश्चान्ये न य एवं वेद
6. 2. 4. वरं भगवते गौतमाय दद्मः
6. 4. 7. सा चेदस्मै न दद्यात्..सा चेदस्मै नैव दद्यात्
8. सा चेदस्मै दद्यात्
Tait. 1. 11. 3. श्रद्धया देयमश्रद्धयादेयं श्रिया देयं ह्रिया देयं भिया देयं संविदा देयम्
3. 10. 6. यो मा ददाति स इदेव मा३वाः
Katha. 1. 1. वाजश्रवसः सर्ववेदसं ददौ
3. तान् स गच्छति ता ददत्
4. कस्मै मां दास्यसीति.. मृत्यवे त्वा ददामीति
16. वरं तवेहाद्य ददामि भूयः
Swet. 6. 22. नाप्रशान्ताय दातव्यम्
Maitri. 6. 8. सर्वभूतेभ्यो ऽभयं दत्त्वा
9. यच्च पापेन दत्तम्
29. अनन्यभक्ताय सर्वगुणसम्पन्नाय दद्यात्
Mahânâr. 4. 7. मृत्तिके देहि मे पुष्टिम्
11. तीर्थं मे देहि याचितः
16. 5. मेधां मे इन्द्रो ददातु
17. 6. त्रिसुपर्णमयाचितं ब्राह्मणाय दद्यात् 7, 8.
20. 11. महाँ इन्द्रः..शर्म यच्छतु
24. देहि देहि ददापयिता
23. 1. तस्मादन्नं ददन्त्सर्वाण्येतानि ददाति
Nrip. 1. 4. यदि दातुमपेक्षते पुत्राय शुश्रूषवे दास्यति
7. स सर्वैश्वर्यं ददाति
2. 4. सर्वदा भद्रं ददाति
— यो मा ददाति स इदेव मावत्
5. 2. श्रद्धया यां काञ्चिद्दद्यात्

Nrisut. 2. अस्य सर्वस्य स्वात्मानं ददाति
7. स्वात्मानमेषां ददाति
Siras. 3. हुतमहुतं दत्तमदत्तम्
Katharu. 1. सर्वस्वं दद्यात्
3. तैजसानि गुरवे दद्यात्
4. भिक्षाशी न दद्यात्
Pinda. 1. मृतस्य दीयते पिण्डम्
Asrama. 2. ददतो न प्रतिगृह्णन्तः
— ददतः प्रतिगृह्णन्तः
Gopi. 4. य एवं विद्वान् यतिहस्ते दद्यात्
Râmap. 33. देहि श्रियं च ते
34. त्वमैश्वर्यं दापय
43. आदाय मैथिलीमथ ददत
84. न देयं प्राकृते जने
Râmot. 4. तद्दास्यामि परमेश्वर
— देहि तज्जन्तोर्मुक्तिम्
Mukti. 1. 47. राज्यं देयं धनं देयम्
— इदमष्टोत्तरशतं न देयम्
48. दातव्यं न कदाचन
50. सम्यक्परीक्ष्य दातव्यम्
52. सम्यक्परीक्ष्य दद्याः
Gitâ. 3. 12. दास्यन्ते यज्ञभाविताः
— तैर्दत्तानप्रदायैभ्यः
9. 27. यज्जुहोषि ददासि यत्
10. 10. ददामि बुद्धियोगं तम्
11. 8. दिव्यं ददामि ते चक्षुः
16. 15. यक्ष्ये दास्यामि मोदिष्ये
17. 20. दातव्यमिति यद्दानं दीयते
21. दीयते च परिक्लिष्टम्
22. अपात्रेभ्यश्च दीयते
28. अश्रद्धया हुतं दत्तम्

## दाक्ष्य

Gitâ. 18. 43. शौर्यं तेजो धृतिर्दाक्ष्यम्

## दातृ

Brih. 3. 9. 28. रातिर्दातुः परायणम्

Mahânâr. 22. 1. लोके दातारं सर्वभूतान्युपजीवन्ति

Praśna. 2. 11. त्वयमाद्यस्य दातारः

## दान

Chhâ. 2. 23. 1. यज्ञो ऽध्ययनं दानमिति प्रथमः

3. 17. 4. अथ यत्तपोदानम्

Bṛih. 4. 4. 22. यज्ञेन दानेन तपसा 6. 2. 16.

5. 2. 3. एतत्त्रयं शिक्षेद्दमं दानं दयाम्

Mahânâr. 8. 1. दानं तपो यज्ञस्तपः

21. 2. दानमिति सर्वाणि भूतानि प्रशंसन्ति दानान्नातिदुष्करं तस्माद्दाने रमन्ते

22. 1. दानं . . दानेनारातीरपानुदन्त दानेन द्विषन्तो मित्रा भवन्ति दाने सर्वं प्रतिष्ठितं तस्माद्दानं परमं वदन्ति

Nyâsa. 4. स्नानं दानं तथा शौचम् Kaṭhaśru. 4.

Gopi. 5. जपदानादि यत्कृतम् — गोपीचन्दनदानस्य

Gitâ. 8. 28. दानेषु यत्पुण्यफलं प्रदिष्टम्

10. 5. तपो दानं यशो ऽयशः

11. 48. न वेदयज्ञाध्ययनैर्न दानैः

53. न दानेन न चेज्यया

16. 1. दानं दमश्च यज्ञश्च

17. 7. यज्ञस्तपस्तथा दानम्

20. यद्दानं दीयते ऽनुपकारिणे — तद्दानं सात्त्विकं स्मृतम्

21. तद्दानं राजसं स्मृतम्

22. अदेशकाले यद्दानम्

24. यज्ञदानतपःक्रियाः

25. दानक्रियाश्च विविधाः

27. यज्ञे तपसि दाने च

18. 3. यज्ञदानतपःकर्म 5.

5. यज्ञो दानं तपश्चैव

43. दानमीश्वरभावश्च

## दानव

Gitâ. 10. 14. न . . देवा न दानवाः

## दामन्

Bṛih. 2. 2. 1. प्राणः स्थूणान्नं दाम

## दायक

Mukti. 2. 54. परमानन्ददायकम् (MSS. read °दीपकं)

## दार

Bṛih. 6. 4. 12. एवंविच्छ्रोत्रियस्य दारेण नोपहासमिच्छेत्

Maitri. 6. 28. पुत्रदारकुटुंबेषु सक्तस्य

Nyâsa. 2. दारमाहृत्य सदृशम्

Kaṭhaśru. 3. दारानाहृत्य पुत्रानुत्पाद्य

Gitâ. 13. 9. पुत्रदारगृहादिषु

## दारु

Chhâ. 4. 17. 7. लोहेन दारु चर्मणा

Bṛih. 3. 9. 28. अस्थीन्यन्तरतो दारूणि

## दारुपात्र

Kaṭhaśru. 3. दारुपात्राण्यग्नौ जुहुयात्

Aruṇeya. 5. मृत्पात्रं वा अलाबुपात्रं दारुपात्रं वा

## दारुभूत

Kaush. 2. 14. तद्धाप्राणत् शुष्कं दारुभूतं शिश्ये

## दाल्भ्य

Chhâ. 1. 2. 13. बको दाल्भ्यः 1. 12. 1.

1. 8. 1. चैकितायनो दाल्भ्यः

3. चैकितायनं दाल्भ्यम्

6. अप्रतिष्ठितं वै किल ते दाल्भ्य साम

## दासभार्य्य

Chhâ. 7. 24. 2. हस्तिहिरण्यं दासभार्य्यम्

## दासी

Bṛih. 6. 2. 7. गोअश्वानां दासीनाम्

## दासीनिष्क

Chhâ. 5. 13. 2. प्रवृत्तो ऽश्वतरीरथो दासी-निष्कः

## दास्य

Bṛih. 4. 4. 23. विदेहान्ददामि मां चापि सह दास्याय

## दिग्धविद्ध

Bṛih. 6. 4. 9. दिग्धविद्धामिव मादयेमाम्

## दिन

Piṇḍa. 3. दिनमेकं तु वायुगः
Vâsu. 3. अस्थीनि चक्ररूपाणि भवन्त्येव दिने दिने

## 1. दिव्

Gîtâ. 10. 36. द्यूतं छलयतामस्मि

## 2. दिव्, द्यु

Ait. 1. 2. अदो ऽम्भः परेण दिवं द्यौः प्रतिष्ठा
Kaush. 2. 8. मे सुसीमं हृदयं दिवि चन्द्रमसि श्रितम्
3. 1. दिवि प्रह्लादीयानतृणम्
Chhâ. 1. 3. 7. द्यौरेवोत्
1. 6. 3. द्यौरेवर्क्..द्यौरेव सा
2. 2. 1. द्यौर्निधनम्
2. द्यौर्हिंकारः
2. 17. 1. द्यौरुद्गीथः
3. 1. 1. तस्य द्यौरेव तिरश्चीनवंशः
3. 12. 6. त्रिपादस्यामृतं दिवि
3. 13. 7. यदतः परो दिवो ज्योतिर्दीप्यते
3. 14. 3. ज्यायान्दिवः
3. 15. 1. द्यौरस्योत्तरं बिलम्
5. दिवं प्रपद्ये
Chhâ. 3. 19. 2. यत्सुवर्णं सा द्यौः
4. 1. 2. समं दिवा ज्योतिराननम्
4. 6. 3. द्यौः कला
4. 13. 1. प्राण आकाशो द्यौर्विद्युत्
4. 17. 1. आदित्यं दिवः
5. 12. 1. दिवमेव भगवो राजन्
5. 19. 2. द्यौस्तृप्यति दिवि तृप्यत्यां यत्किञ्च द्यौश्चादित्यश्चाधितिष्ठतस्तत्तृप्यति
7. 2. 1. दिवं च पृथिवीं च 7. 7. 1.
7. 6. 1. ध्यायतीव द्यौः
7. 8. 1. बलेन द्यौः (तिष्ठति)
7. 10. 1. यद् द्यौर्यत्पर्वताः
8. 5. 3. तृतीयस्यामितो दिवि
Bṛih. 1. 1. 1. द्यौः पृष्ठम् 1. 2. 3.
1. 5. 12. मनसो द्यौः शरीरम्
— यावदेव मनस्तावती द्यौः
19. दिवश्चैनमादित्याच्च
2. 2. 2. द्यौरुत्तरया (वर्त्तन्या)
3. 7. 8. यो दिवि तिष्ठन्दिवो ऽन्तरो यं द्यौर्न वेद यस्य द्यौः शरीरं यो दिवमन्तरो यमयति
3. 8. 3. यदूर्ध्वं..दिवः 4, 6, 7.
3. 9. 3. आदित्यश्च द्यौश्च 7.
5. 14. 1. भूमिरन्तरिक्षं द्यौः
6. 3. 6. मधु द्यौरस्तु नः पिता Mahânâr. 9. 9; 17. 7.
6. 4. 20. द्यौरहं पृथिवी त्वम्
22. यथा द्यौरिन्द्रेण गर्भिणी
Tait. 1. 3. 1. द्यौरुत्तररूपम्
1. 7. 1. पृथिव्यन्तरिक्षं द्यौः
Śwet. 2. 3. युक्त्वाय..धिया दिवम्
3. 9. वृक्ष इव स्तब्धो दिवि तिष्ठत्येकः Mahânâr. 10. 4.
Maitri. 6. 2. स एषोऽग्निर्दिवि श्रितः सौरः
33. करैर्यजमानं दिवमुत्क्षिप्त्वा

Maitri. 6. 33. सैषा द्यौः प्रजापतेस्तृतीया चितिः
34. द्यौराहवनीयः
Muṇḍ.2. 2. 5. यस्मिन्द्यौः पृथिवी चान्तरिक्षमोतम्
Mahânâr. 1. 3. येनावृतं खं च दिवं मही च
5. 7. दिवं च पृथिविं चान्तरिक्षम्
21. 2. यज्ञेन हि देवा दिवं गताः 23. 1.
22. 1. सत्येनादित्यो रोचते दिवि
23. 1. अन्तरिक्षं च द्यौश्च
Praśna. 1. 10. दिव आहुः परे अर्द्धे पुरीषिणम्
Nṛip. 1. 2. वसुरुद्रादित्यैः सर्वैः सेवितं दिवम्
2. 1. तृतीया द्यौः स मकारः Nṛisut. 3; Śikhâ. 1.
5. 10. दिवीव चक्षुराततम् Aruṇeya. 5; Vâsu. 4; Skanda. 15; Mukti. 2. 77.
Brahmav. 7. सामवेदस्तथा द्यौश्च
Śiras. 2. यो वै रुद्रः..या च द्यौः
6. नव दिवो देवजनेन गुप्ताः
Nîla. 1. अवरोहन्तं दिवितः
2. दिव उग्रो अवारुक्षत्
18. ये अन्तरिक्षे ये दिवि
19. ये चामी रोचने दिवि
Nyâsa. 1. अभ्युदय दिवं च लोकम्
Kâlâg. 2. तृतीया रेखा सा...द्यौः
Gitâ. 9. 20. अश्नन्ति दिव्यान्दिवि देवभोगान्
11. 12. दिवि सूर्यसहस्रस्य
18. 40. दिवि देवेषु वा पुनः

## दिवसकृत

Nâr. 5. दिवसकृतं पापं नाशयति

## दिवा

Śwet. 4. 18. यदातमस्तन्न दिवा न रात्रिः
Mahânâr. 18. 1. यद्दिवा च नक्तं चैनश्चकृम
20. 1. ये भूताः प्रचरन्ति दिवा नक्तम्
Praśna. 1. 13. ये दिवा रत्या संयुज्यन्ते
Kaṭhaśru. 1. नास्य नक्तं न वा दिवा

## दिवाकर

Mahânâr. 3. 8. दिवाकराय धीमहि
9. दिवाकराय विद्महे

## दिविक्षित्

Chhâ. 2. 24. 14. नम आदित्येभ्यश्च..दिविक्षिद्भ्यः
Maitri. 6. 35. नम आदित्याय दिविक्षिते

## दिवे दिवे

Kaṭha. 4. 8. दिवे दिव ईड्यः..अग्निः

## दिव्य

Śwet. 2. 5. आ ये धामानि दिव्यानि तस्थुः
Muṇḍ.2. 1. 2. दिव्यो ह्यमूर्त्तः पुरुषः
2. 2. 7. दिव्ये ब्रह्मपुरे..आत्मा प्रतिष्ठितः
3. 1. 7. बृहच्च तद्दिव्यमचिन्त्यरूपम्
3. 2. 8. परात्परं पुरुषमुपैति दिव्यम्
Brahma. 1. दिव्ये ब्रह्मपुरे सम्प्रतिष्ठिताः
— दिव्ये ब्रह्मपुरे..यद्ब्रह्म विभाति
Yogaśi. 5. आदित्यमण्डलं दिव्यम्
Nyâsa. 1. तस्यैषाहुतिर्दिव्या
Gitâ. 1. 14. दिव्यौ शंखौ प्रदध्मतुः
4. 9. जन्म कर्म च मे दिव्यम्
8. 8. परमं पुरुषं दिव्यम्
10. स तं परं पुरुषमुपैति दिव्यम्
9. 20. अश्नन्ति दिव्यान्दिवि देवभोगान्

Gîtâ. 10. 12. पुरुषं शाश्वतं दिव्यम्
16. दिव्या ह्यात्मविभूतयः 19.
40. नान्तो ऽस्ति मम दिव्यानां विभूतीनाम्
11. 5. नानाविधानि दिव्यानि
8. दिव्यं ददामि ते चक्षुः
15. उरगांश्च दिव्यान्

## दिव्यगन्धानुलेपन

Gîtâ. 11. 11. दिव्यगन्धानुलेपनम्

## दिव्यचक्षुस्

Haṁsa. 2. दिव्यचक्षुस्तथामलम्

## दिव्यमन्त्र

Amṛita. 20. दिव्यमन्त्रेण बहुशः कुर्यादात्ममलच्युतिम्

## दिव्यमाल्याम्बरधर

Gîtâ. 11. 11. दिव्यमाल्याम्बरधरम्

## दिव्यानेकोद्यतायुध

Gîtâ. 11. 10. दिव्यानेकोद्यतायुधम्

## 1. दिश्

Chhâ. 5. 9. 2. तं प्रेतं दिष्टमितो ऽग्नय एव हरन्ति

Gauḍa. 4. 2. देशितस्तं नमाम्यहम्
42. जातिस्तु देशिता बुद्धैः

## 2. दिश्

Ait. 2. 4. दिशः श्रोत्रं भूत्वा कर्णौ प्राविशन्

Kaush. 2. 12. तस्या दिश एव तेजो गच्छति
3. 3. यथाग्नेर्ज्वलतः सर्वा दिशो विष्फुलिंगा विप्रतिष्ठेरन्
4. 20.

Chhâ. 1. 3. 11. यां दिशमभिष्टोष्यन् स्यात्तां दिशमुपधावेत्
2. 17. 1. दिशः प्रतिहारः

Chhâ. 2. 21. 4. सर्वा दिशो बलिमस्मै हरन्ति
3. 15. 1. दिशो ह्यस्य स्रक्तयः
2. तस्य प्राची दिग् जुहूर्नाम
— एतमेवं वायुं दिशां वत्सं वेद (bis).
3. 18. 2. दिशः पादः
6. स दिग्भिर्ज्योतिषा भाति
4. 3. 8. सर्वासु दिक्ष्वन्नमेव दश कृतम्
4. 5. 2. प्राची दिक् कला प्रतीची दिक् कला &c.
4. 12. 1. आपो दिशो नक्षत्राणि चन्द्रमाः
5. 6. 1. दिशोऽङ्गाराः Bṛih. 6. 2. 9.
5. 20. 2. दिशस्तृप्यन्ति दिक्षु तृप्यन्तीषु यत्किञ्च दिशश्च चन्द्रमाश्चाधितिष्ठन्ति तत्तृप्यति
6. 8. 2. दिशं दिशं पतित्वा (bis).
6. 14. 2. एतां दिशं गन्धारा एतां दिशं व्रज

Bṛih. 1. 1. 1. दिशः पार्श्वे
1. 2. 3. तस्य प्राची दिक् शिरः
— अस्य प्रतीची दिक् पुच्छम्
1. 3. 10. यत्रासां दिशामन्तः
15. ता दिशो ऽभवंस्ता इमा दिशः परेण मृत्युमतिक्रान्ताः
2. 1. 11. दिक्षु पुरुषं एतं..ब्रह्मोपासे
2. 5. 6. दिशः सर्वेषां .. मध्वासां दिशां सर्वाणि..मधु
— दिक्षु..अमृतमयः पुरुषः
3. 2. 13. दिशः श्रोत्रं ( अप्येति )
3. 7. 10. यो दिक्षु तिष्ठन्दिग्भ्यो ऽन्तरो यं दिशो न विदुर्यस्य दिशः शरीरं यो दिशो ऽन्तरो यमयति

Bṛih. 3. 8. 9. प्रतीच्यो ऽन्या यां यां च दिशम्
3. 9. 13. तस्य का देवतेति दिश इति
19. दिशो वेद..यद्दिशो वेत्थ
20. किंदेवतो ऽस्यां प्राच्यां दिश्यसि (similarly in 21—24.
4. 1. 3. यधाशङ्का भवति यां दिशमेति
5. कानन्तता..दिश एव
— यां कां च दिशं गच्छति ..अनन्ता हि दिशः
— दिशो वै सम्राट् श्रोत्रम्
4. 2. 4. तस्य प्राची दिक् प्राञ्चः प्राणाः
— दक्षिणा दिग्दक्षिणे प्राणाः
— प्रतीची दिक् प्रत्यञ्चः प्राणाः
— उदीची दिगुदञ्चः प्राणाः
— ऊर्ध्वा दिगूर्ध्वाः प्राणाः
— अवाची दिगवाञ्चः प्राणाः
— सर्वा दिशः सर्वे प्राणाः
6. 3. 6. दिशामेकपुण्डरीकमसि
6. 4. 22. वायुर्दिशां यथा गर्भः
Tait. 1. 7. 1. दिशो ऽवान्तरदिशः
Śwet. 5. 4. सर्वा दिश ऊर्ध्वमधश्च तिर्यक्
Maitri. 6. 2. चतस्रो दिशश्चतस्र उपदिशः
Muṇḍ.2. 1. 4. दिशः श्रोत्रे
Mahânâr. 2. 1. एष हि देवः प्र दिशो ऽनु सर्वाः
6. परि दिशः परि सुवः
7. परीत्य सर्वाः प्रदिशो दिशश्च
8. जीवनं च दिशो दिशः
23. 1. दिशश्चावान्तरदिशश्च
Praśna. 1. 6. आदित्य उदयन्यत्प्राचीं दिशं प्रविशति
Gauḍa. 2. 24. दिश इति च तद्विदः
4. 63. दिक्षु वै दशसु स्थितान् 65.
Śiras. 1. दिशश्चान्तरं प्राविशत्
— दिशश्च प्रतिदिशश्चाहम्
Nîla. 9. दिक्षु श्रिताः सहस्रशः
Kaṭhaśru. 1. प्राचीमुदीचीं वा दिशम्
Nâr. 2. दिशश्च नारायणः
Aśrama. 3. यां दिशमभिप्रेक्षन्ते
Râmap. 71. तस्य दिक्षु विदिक्षु च
87. तांस्तस्य दिक्ष्वर्चयेच्च
89. ज्ञानात्मानं चार्चयेत्तस्य दिक्षु
Gîtâ. 6. 13. दिशश्चानवलोकयन्
11. 20. व्याप्तं त्वयैकेन दिशश्च सर्वाः
25. दिशो न जाने न लभे च शर्म
36. दिशो द्रवन्ति

## दिह्

Nyâsa. 5. अयं मूर्धानमस्य देह (=दिदेह Nârâyaṇa).

## दीक्ष्

Chhâ. 5. 2. 4. अमावास्यायां दीक्षित्वा
Bṛih. 3. 9. 23. दीक्षितमाहुः सत्यं वद

## दीक्षा

Chhâ. 3. 17. 1. ता अस्य दीक्षा
Bṛih. 3. 9. 23. स सोमः कस्मिन्प्रतिष्ठित इति दीक्षायामिति कस्मिन्नु दीक्षा प्रतिष्ठिता
— सत्ये ह्येव दीक्षा प्रतिष्ठिता
Muṇḍ.2. 1. 6. दीक्षा यज्ञाश्च सर्वे
Mahânâr. 25. 1. यावद्भ्रियते सा दीक्षा
Garbha. 5. धृतिर्दीक्षा सन्तोषश्च
Nyâsa. 2. दीक्षामुपेयात् Kaṭhaśru. 4.

## दीप्

Kaush. 2. 12. एतद्वै ब्रह्म दीप्यते (4 times); 13 (4 times).

Chhâ. 3. 13. 7. यदतः परो दिवो ज्योतिर्दीप्यते

Bṛih. 1. 3. 12. अग्निः परेण मृत्युमतिक्रान्तो दीप्यते

3. 1. 8. दीप्यत इव हि देवलोकः

Maitri. 6. 35. एतद्यदादित्यस्य मध्ये यजुर्दीप्यति

Mahânâr. 12. 2. य एष एतस्मिन्मण्डलेऽर्चिर्दीप्यते

Nṛip. 2. 4. दीप्तो दीपयन् दीप्यमानः

Gitâ. 11. 24. नभस्पृशं दीप्तमनेकवर्णम्

## दीप

Maitri. 6. 30. दीपवद्यः स्थितो हृदि

36. यथा दीपस्य संस्थितिः

Kshur. 23. दीपो दग्ध्वा लयं व्रजेत्

Dhyâna. 2. तत्त्वमार्गे यथा दीपः Yogat. 2.

Yogat. 13. घटमध्ये यथा दीपम्

Mukti. 2. 18. शममायाति दीपवत्

46. चेतसो दीपमुत्सृज्य

Gitâ. 6. 19. यथा दीपो निवातस्थः

## दीपप्रकाश

Vâsu. 2. तत्र दीपप्रकाशं स्वमात्मानं पश्यन्

## दीपवत्प्रकाश

Atmapra. 1. तडिदाभमात्रं दीपवत्प्रकाशः (°प्रकाशं in one MS.)

## दीपवर्त्ति

Yogaśi. 5. प्रज्वलेद्दीपवर्त्तिवत्

## दीपशिखा

Yogaśi. 6. दीपशिखायां या मात्रा

## दीपसङ्काश

Brahmav. 10. शिखा च दीपसङ्काशा

## दीपोपम

Śwet. 2. 15. यदात्मतत्त्वेन . . दीपोपमेन

## दीप्तविशालनेत्र

Gitâ. 11. 24. व्यात्ताननं दीप्तविशालनेत्रम्

## दीप्तहुताशवक्त्र

Gitâ. 11. 19. पश्यामि त्वां दीप्तहुताशवक्त्रम्

## दीप्तानलार्कद्युति

Gitâ. 11. 17. दीप्तानलार्कद्युतिमप्रमेयम्

## दीप्तिमन्त्

Gitâ. 11. 17. तेजोराशिं सर्वतो दीप्तिमन्तम्

## दीर्घ

Nṛip. 3. 1. ह्रस्वा वा दीर्घा वा प्लुता वेति

— यदि दीर्घा भवति

Śikhâ. 1. स्थूलह्रस्वदीर्घप्लुतः

Piṇḍa. 7. दीर्घमायुः प्रजायते

## दीर्घघण्टानिनाद

Dhyâna. 18. दीर्घघण्टानिनादवत्

## दीर्घभाजिन्

Râmap. 61. दीर्घभाजि षडङ्गेषु

## दीर्घयुक्त

Râmap. 79. तापिनी दीर्घयुक्ता भूः

## दीर्घयुत

Râmap. 78. दीर्घयुतो वायुः

## दीर्घसूत्रिन्

Gitâ. 18. 28. विषादी दीर्घसूत्री च

Brih. 4. 6. 2. सैतवः पाराशर्यायणात्
— पाराशर्यायणो गार्ग्यायणात्

## पारिक्षित

Brih. 3. 3. 1. क पारिक्षिता अभवन् (ter).

## पारुष्य

Gitâ. 16. 4. क्रोधः पारुष्यमेव च

## पार्थ

Gitâ. 1. 25. उवाच पार्थ पश्यैतान्
26. तत्रापश्यत्स्थितान्पार्थः
2. 3. क्लैब्यं मास्म गमः पार्थ
21. कथं स पुरुषः पार्थ
32. सुखिनः क्षत्रियाः पार्थ
39. बुद्ध्या युक्तो यया पार्थ
42. वेदवादरताः पार्थ
55. सर्वान्पार्थ मनोगतान्
72. एषा ब्राह्मी स्थितिः पार्थ
3. 16. मोघं पार्थ स जीवति
22. न मे पार्थास्ति कर्त्तव्यम्
23. मनुष्याःपार्थ सर्वशः 4. 11.
4. 33. सर्वं कर्माखिलं पार्थ
6. 40. पार्थ नैवेह नामुत्र
7. 1. मय्यासक्तमनाः पार्थ
10. विद्धि पार्थ सनातनम्
8. 8. याति पार्थानुचिन्तयन्
14. तस्याहं सुलभः पार्थ
19. रात्र्यागमे ऽवशः पार्थ
22. पुरुषः स परः पार्थ
27. नैते सृती पार्थ जानन्
9. 13. महात्मानस्तु मां पार्थ
32. मां हि पार्थ व्यपाश्रित्य
10. 24. मां विद्धि पार्थ बृहस्पतिम्
11. 5. पश्य मे पार्थ रूपाणि
9. दर्शयामास पार्थाय
12. 7. भवामि नचिरात्पार्थ
16. 4. अज्ञानं च..पार्थ

Gitâ. 16. 6. आसुरं पार्थ मे शृणु
17. 26. मच्छब्दः पार्थ युज्यते
28. असदित्युच्यते पार्थ
18. 6. इति मे पार्थ निश्चितं मतम्
30. बुद्धिः सा पार्थ सात्त्विकी
31. बुद्धिः सा पार्थ राजसी
32. बुद्धिः सा पार्थ तामसी
33. धृतिः सा पार्थ सात्त्विकी
34. धृतिः सा पार्थ राजसी
35. धृतिः सा पार्थ तामसी
72. कच्चिदेतच्छ्रुतं पार्थ
74. पार्थस्य च महात्मनः
78. यत्र पार्थो धनुर्धरः

## पार्थिव

Brih. 6. 3. 6. मधुमत्पार्थिवं रजः
Mahânâr. 9. 9; 17. 7.
Amṛita. 30. पार्थिवः पञ्चमात्राणि

## पार्वती

Haṁsa. 1. पार्वत्या कथितं तत्त्वम्

## पार्श्व

Brih. 1. 1. 1. दिशः पार्श्वे
1. 2. 3. दक्षिणा चोदीची च पार्श्वे
Nṛip. 5. 2. सूर्याचन्द्रमसौ पार्श्वयोः (आसाते)
Garbha. 5. षोडश पार्श्वदन्तौष्ठपटलानि
Haṁsa. 2. अग्निश्चोभे पार्श्वे भवतः
— शिटोभयपार्श्वे भवतः
Râmap. 60. कुरुद्वयं च तत्पार्श्वे

## पार्श्वार्चन

Râmap. 85. पार्श्वार्चनं मध्यपद्मार्चनं च

## पार्ष्णि

Chûl. 13. पार्ष्णिः सलिल एव च (पार्ष्णिः पादपृष्ठं तत्तुल्यः संहारे लोकमर्दनात् Nârâyaṇa).

## पालाश

Aruṇeya. 5. पालाशं बैल्वमौदुंवरं दण्डम्

## पावक

Maitri. 6. 34. तत एव पवमानपावकशुचयः
— पवमानपावकशुचिसंघातो हि जाठरः

Muṇḍ. 2. 1. 1. यथा सुदीप्तात् पावकाद्विस्फुलिङ्गाः

Mahânâr. 3. 6. पावकाय विद्महे

Gîtâ. 2. 23. नैनं दहति पावकः
10. 23. वसूनां पावकश्चास्मि
15. 6. न शशांको न पावकः

## पावन

Maitri. 6. 7. पवनात्पावनः

Gopî. 5. मण्डनात्पावनं नृणाम्
— पावनं पीतवर्णकम्

Gîtâ. 18. 5. पावनानि मनीषिणाम्

## पावनि

Mukti. 2. 33. त्वं पावने शृणु सादरम्

## पाश

Kaṭha. 4. 2. ते मृत्योर्यन्ति विततस्य पाशम्

Maitri. 4. 2. सदसत्फलमयैः पाशैः पङ्गुरिव बद्धम्

Mahânâr. 20. 13. उन्मुक्तो वरुणस्य पाशः

Kaivalya. 11. पाशं दहति पण्डितः

Kshur. 22. पाशं छित्त्वा यथा हंसः

## पाशबद्ध

Skanda. 7. पाशबद्धस्तथा जीवः

## पाशमुक्त

Skanda. 7. पाशमुक्तः सदाशिवः

## पाशुपत

Siras. 5. यस्माद्व्रतमिदं पाशुपतम्
— तदेतत् पाशुपतं पशुपाशविमोक्षणाय

Mukti. 1. 37. सावित्र्यात्मा पाशुपतम्
1. *vide* गारुड

## पाषाण

Dhyâna. 7. पाषाणेष्विव काञ्चनं Yogat. 8.

Râmot. 4. पाषाणप्रतिमादिषु

## पिङ्गल

Kaush. 4. 19. पिङ्गलस्याणिम्ना तिष्ठन्ति

Chhâ. 8. 6. 1. ताः पिङ्गलस्याणिम्नस्तिष्ठन्ति
— असौ वा आदित्यः पिङ्गलः

Bṛih. 4. 3. 20. शुक्लस्य नीलस्य पिङ्गलस्य
4. 4. 9. पिङ्गलं हरितं लोहितं च
6. 4. 15. पुत्रो मे कपिलः पिङ्गलो जायेत

## पिङ्गला

Kshur. 16. पिङ्गला दक्षिणेन तु

## पिण्ड

Maitri. 7. 11. लोहितस्यात्र पिण्डः

Garbha. 3. अर्द्धमासाभ्यन्तरे पिण्डम्

Piṇḍa. 1. मृतस्य दीयते पिण्डम्
4. प्रथमेन तु पिण्डेन (and so with each number up to दशमेन)
9. पिण्डे पिण्डे शरीरस्य

Gîtâ. 1. 42. लुप्तपिण्डोदकक्रियाः

## पिण्डदान

Piṇḍa. 9. पिण्डे पिण्डे शरीरस्य पिण्डदानेन संभवः

## पिण्डीकरण

Garbha. 1. आपः पिण्डीकरणे

## पितापुत्रीय

Kaush. 2. 15. अथातः पितापुत्रीयं संप्रदानम्

## पितामह

Brih. 6. 2. 8. मापराधास्तव च पितामहाः
Kaivalya. 2. तस्मै स होवाच पितामहश्च
Dhyâna. 12. चतुर्वक्त्रं पितामहम्
Gitâ. 1. 12. कुरुवृद्धः पितामहः
26. पितॄनथ पितामहान्
34. तथैव च पितामहाः
9. 17. माता धाता पितामहः

## पितृ

Kaush. 1. 1. पितरमासाद्य पप्रच्छ
2. द्वादशत्रयोदशेन पित्रासम्
2. 15. पिता पुत्रं प्रेष्यन्नाह्वयति
— अहतेन वाससा सम्प्रच्छन्नः पिता शेते
— वाचं मे त्वयि दधानीति पिता वाचं ते मयि दध इति पुत्रः (similarly 11 times more).
— तं पितानुमंत्रयते
— स यद्यगदः स्यात्पुत्रस्यैश्वर्ये पिता वसेत्
Chhâ. 2. 9. 8. तदस्य पितरो ऽन्वायत्ताः
2. 21. 1. सर्पा गन्धर्वाः पितरस्तन्निधनम्
2. 22. 2. स्वधां पितृभ्यः
3. 11. 4. पिता ब्रह्म प्रोवाच
5. पिता ब्रह्म प्रब्रूयात्
5. 1. 7. प्राणाः प्रजापतिं पितरमेत्योचुः
5. 3. 1. कुमारानु त्वाशिषत्पिता
4. आयस्तः पितुरर्द्धमेयाय
6. 1. 1. तं ह पितोवाच 3.
7. 15. 1. प्राणो ह पिता
Chhâ. 7. 15. 2. स यदि पितरं वा..किञ्चिद्भृशमिव प्रत्याह
8. 2. 1. पितरः समुत्तिष्ठन्ति
Brih. 1. 4. 16. यत्पितृभ्यो निपृणाति..तेन पितॄणाम्
1. 5 1. मेधया तपसाजनयत्पिता 2.
6. देवाः पितरो मनुष्या एत एव
— मनः पितरः
7. पिता माता प्रजैत एव मन एव पिता
3. 8. 9. दर्वीं पितरो ऽन्वायत्ताः
4. 1. 2. पिता मे ऽमन्यत नाननुशिष्य हरेतेति 3—7.
4. 3. 22. पिता ऽपिता भवति
33. पितॄणां जितलोकानाम् (bis).
5. 2. 1. प्रजापतौ पितरि ब्रह्मचर्यमूषुः
5. 8. 1. स्वधाकारं पितरः (उपजीवन्ति)
5. 12. 1. तद्ध स्माह प्रातृदः पितरम्
6. 2. 1. अनुशिष्टो न्वसि पित्रा
2. द्वे सृती अशृणवं पितॄणामहं देवानामुत मर्त्यानाम्
— यदन्तरा पितरं मातरं च
3. स आजगाम पितरम्
6. 3. 6. मधु द्यौरस्तु नः पिता Mahânâr. 9. 9; 17. 7.
Tait. 1. 3. 3. पितोत्तररूपम्
2. 8. 1. पितॄणां चिरलोकलोकानाम् (bis).
3. 1. 1. वरुणं पितरमुपससार 3. 2. 1; 3. 3. 1; 3. 4. 1; 3. 5. 1.
Katha. 1. 4. स होवाच पितरं तात
Mahânâr. 2. 4. यस्तद्वेद स पितुः पितासत्
13. 7. मनुष्याः पितरो ऽसुराः
22. 1. प्रजापतिं पितरमुपससार

Mahânâr. 22. 1. पितृणामनृणो भवति
25. 1. पितृणामेव महिमानं गत्वा
Praśna. 1. 11. पञ्चपादं पितरं द्वादशाकृतिम्
2. 8. पितृणां प्रथमा स्वधा
11. पिता त्वं मातरिश्वनः
6. 8. त्वं हि नः पिता यो ऽस्माकमविद्यायाः परं पारं तारयसि
Gauḍa. 4. 15. पुत्राज्जन्म पितुर्यथा
Chûl. 20. पितृणां चोपतिष्ठते
Śiras. 5. येन देवा यान्ति येन पितरः
Garbha. 3. पितू रेतोतिरेकात्पुरुषः
4. पितरः सुहृदस्तथा
Brahma. 2. तत्र . . पिता न पिता
— न तत्र देवा ऋषयः पितर ईशते
Nîla. 22. भवेन मरुतां पिता (= पिता Nârâyaṇa).
Yogat. 4. यः पिता स पुनः पुत्रो य पुत्रः स पुनः पिता
Nyâsa. 1. पितृभ्यः श्राद्धतर्पणं कृत्वा
Kaṭhaśru. 1. मातरं पितरं . . अनुमोदयित्वा
Aruṇeya. 4. पितरं पुत्रमस्युपवीतम्
Gitâ. 1. 26. पितॄनथ पितामहान्
34. आचार्याः पितरः पुत्राः
42. पतन्ति पितरो ह्येषाम्
9. 17. पिताहमस्य जगतः
25. पितॄन्यान्ति पितृव्रताः
10. 29. पितृणामर्यमा चास्मि
11. 43. पितासि लोकस्य चराचरस्य
44. पितेव पुत्रस्य सखेव सख्युः
14. 4. अहं बीजप्रदः पिता

## पितृकृत

Mahânâr. 18 1. पितृकृतस्यैनसो ऽवयजनमसि

## पितृदेव

Tait. 1. 11. 2. पितृदेवो भव

## पितृमन्त्

Bṛih. 4. 1. 2. यथा . . पितृमान् . . ब्रूयात् 3—7.

## पितृमेधिक

Nyâsa. 1. एतान् पितृमेधिकान्

## पितृयाण

Chhâ. 5. 3. 2. वेत्थ पथोर्देवयानस्य पितृयाणस्य च व्यावर्त्तना३ इति
Bṛih. 6. 2. 2. वेत्थो देवयानस्य वा पथः प्रतिपदं पितृयाणस्य वा यत्कृत्वा देवयानं वा पन्थानं प्रतिपद्यन्ते पितृयाणं वा
Praśna. 1. 9. एष ह वै रयिर्यः पितृयाणः

## पितृलोक

Chhâ. 5. 10. 4. मासेभ्यः पितृलोकं पितृलोकादाकाशम्
8. 2. 1. पितृलोकेन सम्पन्नो महीयते
Bṛih. 1. 5. 16. मनुष्यलोकः पितृलोको देवलोकः
— कर्मणा पितृलोकः
3. 1. 8. पितृलोकमेव ताभिर्जयत्यतीव हि पितृलोकः
6. 2. 16. मासेभ्यः पितृलोकं पितृलोकाच्चन्द्रम्
Kaṭha. 6. 5. यथा स्वप्ने तथा पितृलोके

## पितृलोककाम

Chhâ. 8. 2. 1. यदि पितृलोककामो भवति

## पितृवध

Kaush. 3. 1. न मातृवधेन न पितृवधेन

## पितृव्रत

Gîtâ. 9. 25. पितॄन्यान्ति पितृव्रताः

## पितृहन्

Chhâ. 7. 15. 2. पितृहा वै त्वमसि
3. नैवैनं ब्रूयुः पितृहासीति

## पित्त

Maitri. 1. 3. *vide* संघात
3. 4. *vide* वसा

Garbha. 2. अग्निस्थाने पित्तम्
5. पित्तप्रस्थम्

## पित्तस्थान

Garbha. 2. पित्तस्थाने वायुः

## पित्र्य

Chhâ. 7. 1. 2. अध्येमि . . पित्र्यम्
4. नाम वै . . पित्र्यः
7. 2. 1. वाग्वै . . विज्ञापयति . . पित्र्यम्
7. 7. 1. विज्ञानेन वै . . विजानाति . . पित्र्यम्

Bṛih. 4. 4. 4. पित्र्यं वा गान्धर्वं वा

## पित्र्यावन्त्

Kaush. 1. 2. पञ्चदशात् प्रसुतात् पित्र्यावतः

## पिनाकिन्

Nṛip. 1. 6. पिनाकिनं ह्यमितद्युतिम्

Haṁsa. 1. मतं ज्ञात्वा पिनाकिनः

## पिन्व्

Mahânâr. 16. 7. ऊर्जस्वती पयसा पिन्वमाना . . मेधा

## पिपासा

Maitri. 1. 3. *vide* आद्य
3. 5. क्षुत्पिपासा . . इति तामसानि

## पिपीलक, ॰लिका

Chhâ. 7. 2. 1. आकीटपतङ्गपिपीलकम्
7. 7. 1; 7. 8. 1; 7. 10. 1.

Bṛih. 1. 4. 4. आपिपीलिकाभ्यः 16

Sarvop. 3. ब्रह्मादिपिपीलिकापर्यन्तम्

## पिप्पल

Bṛih. 4. 3. 36. यथाम्रं वोदुंबरं वा पिप्पलं वा

Swet. 4. 6. तयोरन्यः पिप्पलं स्वाद्वत्ति
Muṇḍ. 3. 1. 1.

## पिप्पलाद

Praśna. 1. 1. भगवन्तं पिप्पलादमुपसन्नाः

Sikhâ. 1. पिप्पलादोऽङ्गिराः सनत्कुमारश्च

Brahma. 1. अङ्गिरसं भगवन्तं पिप्पलादम्

## पिप्पलाशन

Chûl. 8. सुपर्णं पिप्पलाशनम्

## पिंश्

Bṛih. 6. 4. 21. त्वष्टा रूपाणि पिंशतु

## पिशाच

Maitri. 1. 4. *vide* आदि
7. 8. ditto.

Prâṇâg. 1. रुद्रैः प्रजग्धं यदि वा पिशाचैः

## पिशुन

Chhâ. 7. 6. 1. अल्पाः कलहिनः पिशुनाः

## पिष्

Bṛih. 6. 3. 13. तान् पिष्टान् दधनि मधुनि घृत उपसिञ्चति

## पीठ

Râmap. 85. पीठाधरोर्ध्वम्
87. पीठस्यांघ्रिष्वेषु

## पीड्

Garbha. 4. अवाङ्मुखः पीडितो ऽहम् (one MS. has अवाङ्मुख-पीड्यमानः)

## पीडा

Gîtâ. 17. 19. यत्पीडया क्रियते तपः

## पीत

Kaush. 4. 19. शुक्लस्य कृष्णस्य पीतस्य
Chhâ. 8. 6. 1. शुक्लस्य नीलस्य पीतस्य — एष शुक्ल एष नील एष पीतः
Kshur. 8. अणुरक्ताश्च पीताश्च
Garbha. 2. धूम्रः पीतः कपिलः पाण्डुरः
Vâsu. 3. पीता भास्वत्यणूपमा

## पीतवर्ण, °क

Vâsu. 1. चक्रसमायुक्तं पीतवर्णम्
Gopî. 4. पीतवर्णा मृदो जायन्ते
5. पावनं पीतवर्णकम्

## पीतवासस्

Râmap. 25. पीतवासा जटाधरः

## पीता (=ष)

Râmap. 80. पीता रतिस्तथा लान्तः

## पीताभ

Mahânâr. 11. 12. पीताभा स्यात्तनूपमा

## पीताशित

Maitri. 2. 6. यो ऽयं पीताशितमुद्गिरति निगिरतीति

## पीतोदक

Katha. 1. 3. पीतोदका जग्धतृणाः

## पुंस्

Kaush. 1. 2. मा पुंसि कर्त्रैरयध्वं पुंसा कर्त्रा मातरि मा निषिञ्च
Bṛih. 6. 3. 1. पुंसा नक्षत्रेण मन्थं सन्नीय जुहोति
Bṛih. 6. 4. 20. पुंसे पुत्राय वित्तये
Swet. 4. 3. त्वं स्त्री त्वं पुमानसि
5. 10. नैव स्त्री न पुमानेषः
Muṇḍ. 2. 1. 5. पुमान् रेतः सिञ्चति योषितायाम्
Siras. 1. पुमानपुमान् स्त्रियश्चाहम्
Nâr. 3. मनःप्रग्रहवान्पुमान्
Râmap. 8. पुंस्त्र्यंगास्त्रादिकल्पना
Mukti. 1. 41. ज्ञानवैराग्यदं पुंसाम्
2. 66. न विरज्येत यः पुमान्
Gîtâ. 2. 62. ध्यायतो विषयान्पुंसः
71. पुमांश्चरति निःस्पृहः

## पुच्छ

Bṛih. 1. 2. 3. अस्य प्रतीची दिक् पुच्छम्
Tait. 2. 1. 1. इदं पुच्छं प्रतिष्ठा
2. 2. 1. पृथिवी पुच्छं प्रतिष्ठा
2. 3. 1. अथर्वाङ्गिरसः पुच्छं प्रतिष्ठा
2. 4. 1. महः पुच्छं प्रतिष्ठा
2. 5. 1. ब्रह्म पुच्छं प्रतिष्ठा
Maitri. 6. 33. शिरःपक्षसीपुच्छपृष्ठवान् (ter).
Nâda. 1. मकारस्तस्य पुच्छं वै

## पुण्डरीक

Chhâ. 1. 6. 7. तस्य यथा कप्यासं पुण्डरीकमेवमक्षिणी
8. 1. 1. दहरं पुण्डरीकं वेश्म 2.
Bṛih. 2. 3. 6. पुरुषस्य रूपं . . यथा पुण्डरीकम्
Mahânâr. 10. 7. यत्पुण्डरीकं पुरमध्यसंस्थम्
Kshur. 10. दहरं पुण्डरीकेति (3 MSS. have तुं for ति )
Nâr. 5. तदिदं पुरं पुण्डरीकम् (some MSS. read पुण्डरीकाक्षम् )
Atmapra. 1. यदिदं पुरं ब्रह्मपुरमिदं पुण्डरीकं वेश्म

## पुण्डरीकाक्ष

Atmapra. 1. ब्रह्मण्यः पुण्डरीकाक्षः
Vâsu. 2. गोविन्द पुण्डरीकाक्ष

## पुण्ड्र

Vâsu. 2. पुण्ड्राख्यय ऊर्ध्वाः

## पुण्ड्रस्थ

Vâsu. 3. पूर्वमभ्यस्य पुण्ड्रस्थम्

## पुण्य *adj. & sub.*

Ait. 4. 4. सो ऽस्यायमात्मा पुण्येभ्यः कर्मभ्यः प्रतिधीयते
Kaush. 2. 3. शुद्धपक्षे वा पुण्ये नक्षत्रे
Brih. 1. 4. 15. महत्पुण्यं कर्म करोति
1. 5. 20. पुण्यमेवामुं गच्छति
3. 2. 13. पुण्यो वै पुण्येन कर्मणा भवति
4. 3. 15. दृष्ट्वैव पुण्यं च पापं च 16, 17, 34.
22. अनन्वागतं पुण्येन
4. 4. 5. पुण्यः पुण्येन कर्मणा भवति
Maitri. 6. 4. एतदेवाक्षरं पुण्यम्
Muṇḍ 1. 2. 6. एष वः पुण्यः सुकृतो ब्रह्मलोकः
Mahânâr. 8. 2. पुण्यस्य कर्मणो दूराद्गन्धो वाति
Praśna. 3. 7. पुण्येन पुण्यं लोकं नयति
Yogaśi. 9. पुण्यमेतत् समासाद्य
Haṁsa. 2. पूर्वदले पुण्ये मतिः
Nâr. 5. सर्ववेदपारायणं पुण्यं लभते (some MSS. omit पुण्यं)
Vâsu. 1. मदङ्गलेपनं पुण्यम्
Gopî. 5. ततः कोटिगुणं पुण्यम्
— तेषां पूण्यमवाप्नोति
— विष्णुरूपमिदं पुण्यम्
Gitâ. 7. 9. पुण्यो गन्धः पृथिव्याम्
9. 20. ते पुण्यमासाद्य सुरेन्द्रलोकम्
9. 21. क्षीणे पुण्ये मर्त्यलोकं विशन्ति
33. किं पुनर्ब्राह्मणाः पुण्याः
18. 76. संवादं . . । कृष्णार्जुनयोः पुण्यम्

## पुण्यकर्मन्

Gitâ. 7. 28. जनानां पुण्यकर्मणाम्
18. 71. लोकान्प्राप्नुयात्पुण्यकर्मणाम्

## पुण्यकृत्

Brih. 4. 4. 9. तेनैति ब्रह्मवित्पुण्यकृत्तैजसः
Mahânâr. 5. 9. एष पुण्यकृतां लोकान् . . संशिशाधि

## पुण्यकृत

Gitâ. 6. 41. प्राप्य पुण्यकृतांल्लोकान्

## पुण्यजित

Chhâ. 8. 1. 6. पुण्यजितो लोकः क्षीयते

## पुण्यपाप

Maitri. 6. 18. विद्वान् पुण्यपापे विहाय
Muṇḍ. 3. 1. 3. विद्वान् पुण्यपापे विधूय
Kaivalya. 22. न पुण्यपापे मम नास्ति नाशः
Haṁsa. 2. दग्धे पुण्यपापे

## पुण्यपापकर्मन्

Sarvop. 2. पुण्यपापकर्मानुसारी

## पुण्यफल

Gitâ. 8. 28. दानेषु यत्पुण्यफलं प्रदिष्टम्

## पुण्यलोक

Chhâ. 2. 23. 2. सर्व एते पुण्यलोका भवन्ति
5. 10. 10. पुण्यलोको भवति य एवं वेद
Maitri. 6. 36. पुण्यलोकविजित्यर्थाय

## पुण्यादि

Sarvop. 2. मन आदिश्च प्राणादिश्च सत्त्वादिश्चेच्छादिश्च पुण्यादिश्च

## पुण्याह

Brih. 6. 3. 1. आपूर्यमाणपक्षस्य पुण्याहे

## पुत्र

Kaush. 1. 1. स ह पुत्रं श्वेतकेतुं प्रजिघाय
— गौतमस्य पुत्र
2. 11. पुत्रस्य मूर्धानमभिजिघ्रेत्
— आत्मा वै पुत्र नामासि
— तेजो वै पुत्र नामासि
— पुत्र ते नाम्ना मूर्धानमभिजिघ्रामि
15. पिता पुत्रं प्रेष्यन्नाह्वयति
— एत्य पुत्र उपरिष्टादभिनिपद्यते
— वाचं मे त्वयि दधानीति पिता वाचं ते मयि दध इति पुत्रः (similarly 11 times more).
— स यद्यगदः स्यात्पुत्रस्यैश्वर्यं पिता वसेत्

Chhâ. 1. 5. 2. कौषीतकिः पुत्रमुवाच 4.
3. 1. 1. मरीचयः पुत्राः
3. 11. 4. ज्येष्ठाय पुत्राय पिता ब्रह्म प्रोवाच
5. ज्येष्ठाय पुत्राय पिता ब्रह्म प्रब्रूयात्
6. 8. 1. श्वेतकेतुं पुत्रमुवाच
7. 3. 1. पुत्रांश्च पशूंश्चेच्छेय
7. 13. 1. स्मरेण वै पुत्रान्विजानाति
7. 14. 1. पुत्रांश्च पशूंश्चेच्छते

Brih. 1. 4. 8. तदेतत्प्रेयः पुत्रात्
1. 5. 16. मनुष्यलोकः पुत्रेणैव जय्यः
17. पुत्रमाह त्वं ब्रह्म
— स पुत्रः प्रत्याहाहं ब्रह्म
— पुत्रमनुशिष्टं लोक्यमाहुः
— एभिरेव प्राणैः सह पुत्रमाविशति

Brih. 1. 5. 17. एनं सर्वस्मात्पुत्रो मुञ्चति तस्मात्पुत्रो नाम
— स पुत्रेणैवास्मिँल्लोके प्रतितिष्ठति
2. 4. 5. न वा अरे पुत्राणां कामाय पुत्राः प्रिया भवन्त्यात्मनस्तु कामाय पुत्राः प्रिया भवन्ति 4. 5. 6.
4. 1. 6. तस्यां प्रतिरूपः पुत्रो जायते
6. 4. 14. पुत्रो मे शुक्लो जायेत
15. पुत्रो मे कपिलः पिङ्गलो जायेत
16. पुत्रो मे श्यामो लोहिताक्षो जायेत
18. पुत्रो मे पण्डितः . . जायेत
20. पुंसे पुत्राय वित्तये
28. य एवंविदो ब्राह्मणस्य पुत्रो जायते

Katha. 1. 1. नचिकेता नाम पुत्रः

Swet. 2. 5. शृण्वन्तु विश्वे अमृतस्य पुत्राः

Maitri. 1. 2. विराज्ये पुत्रं निधापयित्वा
6. 28. पुत्रदारकुटुंबेषु सक्तस्य
29 ब्रह्मणः पन्थानमारूढाः पुत्राः प्रजापतेः

Prasna. 2. 13. मातेव पुत्रान् रक्षस्व

Gauda. 4. 15. पुत्राज्जन्म पितुर्यथा

Nrip. 1. 4. पुत्राय शुश्रूषवे दास्यत्यन्यस्मै शिष्याय च

Yogat. 4. यः पिता स पुनः पुत्रो यः पुत्रः स पुनः पिता

Kathasru. 1. भार्यां पुत्रान् . . अनुमोदयित्वा
— निष्क्रम्य पुत्रं दृष्ट्वा 2.
2. अथ पुत्रो वदति
3. दारानाहृत्य पुत्रानुत्पाद्य

Aruneya. 1. पुत्रान् भ्रातॄन् बन्ध्वादीन्
4. पितरं पुत्रमभ्युपवीतम्

Parama. 1. स्वपुत्रमित्रकलत्रबन्ध्वादीन्
Mukti. 2. यथा पुत्रकामेष्टिना पुत्रम्
Gità. 1. 26. पुत्रान्पौत्रान् सखींस्तथा
34. आचार्याः पितरः पुत्राः
11. 26. धृतराष्ट्रस्य पुत्राः
44. पितेव पुत्रस्य सखेव सख्युः
13. 9. पुत्रदारगृहादिषु

## पुत्रकामेष्टि

Mukti. 2. यथा पुत्रकामेष्टिना पुत्रम्

## पुत्रद

Râmap. 83. अपुत्रिणां पुत्रदं च

## पुत्रपशु

Bṛih. 6. 4. 12. पुत्रपशूंस्त आददे
Kaṭha. 1. 8. पुत्रपशूंश्च सर्वान्

## पुत्रपौत्र

Kaṭha. 1. 23. शतायुषः पुत्रपौत्रान् वृणीष्व

## पुत्रमय

Bṛih. 3. 9. 17. य एवायं पुत्रमयः पुरुषः स एषः

## पुत्ररोद

Chhâ. 3. 15. 2. न पुत्ररोदं रोदिति
— मा पुत्ररोदं रुदम्

## पुत्रैषणा

Bṛih. 3. 5. 1. पुत्रैषणायाश्च .. व्युत्थाय 4. 4. 22; Nṛisut. 6.
— या ह्येव पुत्रैषणा सा वित्तैषणा 4. 4. 22.

## पुत्र्य

Kaush. 2. 8. माहं पुत्र्यमघं रुदमिति (MSS. पौत्रम्)
10. मा त्वं पुत्र्यमघं निगाः (one MS. पौत्रम्)

## पुनर्

Ait. 4. 4. स इतः प्रयन्नेव पुनर्जायते
Kaush. 2. 12. तस्मादेव पुनरुदीरते 13.
Chhâ. 4 2. 3. पुनरेव .. सहस्रं गवां .. आदाय
5. 3. 2. वेत्थ यथा पुनरावर्त्तन्ते
5. 10. 5. एतमध्वानं पुनर्निवर्त्तन्ते
7. 26. 2. पुनश्चैकादश स्मृतः
8. 9. 1. स समित्पाणिः पुनरेयाय 8. 10. 3; 8. 11. 2.
2. किमिच्छन् पुनरागमः 8. 10. 3; 8. 11. 2.
8. 15. 1. न च पुनरावर्त्तते Vâsu. 4.
Bṛih. 1. 2. 7. सा पुनरेकैव देवता भवति
1. 5. 2. स हीदमन्नं पुनः पुनर्जनयते
3. 9. 28. रोहति मूलान्नवतरः पुनः
— न पुनराभवेत्
— को न्वेनं जनयेत्पुनः
4. 3. 11. शुक्रमादाय पुनरेति स्थानम्
15. पुनः प्रतिन्यायं प्रतियोन्याद्रवति 16, 17, 34, 36.
4. 4. 6. तस्माल्लोकात्पुनरैति
6. 2. 2. वेत्थो यथेमं लोकं पुनरापद्यन्ता ३
— बहुभिः पुनः पुनः प्रयद्भिः
16. ते पुनः पुरुषाग्नौ हूयन्ते
6. 4. 5. पुनर्मामैत्विन्द्रियं पुनस्तेजः पुनर्भगः पुनरग्निः
Tait. 3. 2. 1. पुनरेव वरुणं पितरमुपससार 3. 3. 1; 3. 4. 1; 3. 5. 1.
Kaṭha. 1. 6. सस्यमिवाजायते पुनः
15. अथास्य मृत्युः पुनरेवाह तुष्टः
2. 6. पुनः पुनर्वशमापद्यते मे
Swet. 6. 22. नापुत्रायाशिष्याय वा पुनः

Maitri. 6. 4. पुनः पञ्चधा ज्ञेयम्
9. अन्नत्वं न पुनरुपैति
26. प्राणादयो वै पुनरेव तस्मादभ्युच्चरन्तीह 31.
7. 1. पुनर्विंशत्यन्तरम् 2—6.
Muṇḍ.1. 2. 7. जरामृत्युं पुनरेवापि यन्ति
Mahânâr. 4. 12. तन्मे पुनन्तु पुनः पुनः
Praśna. 1. 9. त एव पुनरावर्त्तन्ते
10. एतस्मान्न पुनरावर्त्तन्ते
2. 1. कः पुनरेषां वरिष्ठः
4. 2. पुनः पुनरुदयतः
5. प्रत्यनुभूतं पुनः पुनः प्रत्यनुभवति
5. 4. सोमलोके विभूतिमनुभूय पुनरावर्त्तते
5. यः पुनरेतं त्रिमात्रेणैवोमित्येतेनैवाक्षरेण..अभिध्यायीत
Kaivalya. 14. पुनश्च जन्मान्तरकर्मयोगात्
Gauḍa. 1. 23. मकारश्च पुनः प्राज्ञं (नयते)
3. 44. विक्षिप्तं शमयेत् पुनः
46. न च विक्षिप्यते पुनः
4. 19. क्रमकोपो ऽथवा पुनः
83. अस्ति नास्त्यस्ति नास्तीति नास्ति नास्तीति वा पुनः
Nṛisut. 7. पुनः पुनरहन्त्वाच्च
Chûl. 4. तन्यते प्रेरिता पुनः
19. पर्यस्यन्तं पुनः पुनः
Garbha. 4. जन्म जन्म पुनः पुनः
— पुनर्जातः..पुनर्मृतः
Mahâ. 2. पुनरेव नारायणः सोऽन्यत्कामः 3.
Brahma. 3. स्वप्ने..गच्छत्यागच्छते पुनः
Prâṇâg. 2. पुनरादाय पुनरुपस्पृशेत्
Brahmab. 14. भिद्यमानं पुनः पुनः
Amṛita. 1. अभ्यस्य च पुनः पुनः
34. अपानस्तु पुनर्गुदे
Dhyâna. 21. तोयमाकर्षयेत् पुनः
Yogaśi. 6. योगाभ्यासेन वै पुनः
Yogat. 4. या माता सा पुनर्भार्या
— यः पिता स पुनः पुत्रो यः पुत्रः स पुनः पिता
Kaṭhaśru. 4. न पुनरावर्त्तयेत्
Kâlâg. 2. न स पुनरावर्त्तते Atmapra. 1.
Jâbâla. 4. अथ पुनरव्रती वा व्रती वा
Râmap. 28. सधनुष्पाणिना पुनः
52. त्र्यस्रं पुनर्भवेत्
64. पुनरष्टदलं लिखेत्
Râmot. 2. दीर्घानलं पुनः
4. गंगायां वा तटे पुनः
5. पुनरेतया गदया नमस्करोति
Mukti. 2. 11. यावन्नाभ्यस्तं च पुनः पुनः
23. अक्षिदृग्द्रव्येषु यथा पुनः
34. यदा ते विद्यते पुनः
Gîtâ. 4. 35. यज्ज्ञात्वा न पुनर्मोहम्
5. 1. पुनर्योगं च शंससि
8. 26. अन्ययावर्त्तते पुनः
9. 7. कल्पक्षये पुनस्तानि
8. विसृजामि पुनः पुनः
33. किं पुनर्ब्राह्मणाः पुण्याः
11. 16. न पुनस्तवादिं पश्यामि
39. पुनश्च भूयो ऽपि नमो नमस्ते
49. प्रीतमनाः पुनस्त्वम्
50. भूत्वा पुनः सौम्यवपुर्महात्मा
16. 13. मे भविष्यति पुनर्धनम्
17. 21. फलमुद्दिश्य वा पुनः
18. 24. साहंकारेण वा पुनः
40. दिवि देवेषु वा पुनः
77. हृष्यामि च पुनः पुनः

## पुनरावर्त्तिन्

Gitâ. 8. 16. पुनरावर्त्तिनोऽर्जुन

## पुनरावृत्ति

Brih. 6. 2. 15. तेषां न पुनरावृत्तिः
Mukti. 1. 20. पुनरावृत्तिरहितां मुक्तिम्

## पुनरुत्पादन

Chhâ. 3. 17. 5. सोष्यत्यसोष्टेति पुनरुत्पादनमेवास्य

## पुनर्जन्मकर

Mukti. 2. 62. पुनर्जन्मकरी प्रोक्ता

## पुनर्जन्मन्

Kshur. 1. यां प्राप्य न पुनर्जन्म
20. पुनर्जन्मविवर्जिताः
Brahmab. 11. पुनर्जन्म न विद्यते
Gitâ. 4. 9. त्यक्त्वा देहं पुनर्जन्म नैति
8. 15. मामुपेत्य पुनर्जन्म
16. पुनर्जन्म न विद्यते

## पुनर्जन्माङ्कुर

Mukti. 2. 63. पुनर्जन्मांकुरं त्यक्त्वा

## पुनर्भव

Praśna. 3. 9. तस्मादुपशान्ततेजाः पुनर्भवम्
Kâlâg. 1. तत्समाचरेन्मुमुक्षुर्न पुनर्भवाय

## पुनर्मृत्यु

Brih. 1. 2. 7. अप पुनर्मृत्युं जयति 1. 5. 2; 3. 2. 10; 3. 3. 2.
1. 5. 2. तदहः पुनर्मृत्युमपजयति

## पुर्, पुर

Ait. 4. 5. शतं मा पुर आयसीररक्षन्
Chhâ. 8. 5. 3. अपराजिता पूर्ब्रह्मणः
Brih. 2. 5. 18. पुरश्चक्रे द्विपदः पुरश्चक्रे चतुष्पदः
Brih. 2. 5. 18. पुरः पुरुष आविशत् — अयं पुरुषः सर्वासु पूर्षु पुरिशयः
Katha. 5. 1. पुरमेकादशद्वारम्
Swet. 3. 18. नवद्वारे पुरे देही Gitâ. 5. 13.
Mahânâr. 6. 4. पुरश्च पृथ्वी बहुला न उर्वी
Praśna. 4. 3. प्राणाग्नय एवैतस्मिन् पुरे जाग्रति
Nâr. 5. यदिदं पुरं पुण्डरीकम्
Âtmapra. 1. यदिदं पुरं ब्रह्मपुरम्
Râmap. 44. पुरं दग्ध्वा तथा स्वयम्

## पुरःसर

Swet. 2. 11. एतानि रूपाणि पुरःसराणि
Mukti. 1. 41. तत्त्वज्ञान्तिपुरःसरम्

## पुरतस्

Katha. 1. 18. मृत्युपाशान् पुरतः प्रणोद्य
Nrisut. 2. अस्मात्सर्वस्मात्पुरतः सुविभातम्
5. पुरतोऽस्मात्सर्वस्मात्सुविभातम् 9.
6. सर्वस्य पुरतः सुविभातम्
8. अयं ह्यस्मात्सर्वस्मात्पुरतः सुविभातः
9. आत्मा पुरतो हि सिद्धः

## पुरत्रय

Kaivalya. 14. प्रबुद्धः पुरत्रये क्रीडति
15. यस्मिन् लयं याति पुरत्रयं च

## पुरमध्यसंस्थ

Mahânâr. 10. 7. यत्पुण्डरीकं पुरमध्यसंस्थम्

## पुरयाचक

Maitri. 7. 8. पुरयाचका अयाज्ययाजकाः

## पुरस्

Brih. 1. 3. 18. पुर एता भवति
2. 5. 18. पुरः स पक्षी भूत्वा
Mahânâr. 20. 5. वृषेन्द्रः पुर एतु नः
Mukti. 2. 71. पुरस्तिरश्चोर्ध्वमधश्च

## पुरस्कृ

Maitri. 7. 8. अर्थं पुरस्कृत्य

## पुरस्ताज्ज्योतिस्

Śiras. 1. वलिश्च पुरस्ताज्ज्योतिरित्यहमेव सर्वे

## पुरस्तात्

Kaush. 2. 1. ये पुरस्तात् प्रत्याचक्षीरन् 2.
9. पुरस्ताचन्द्रमसं दृश्यमानमुपतिष्ठेत
Chhâ. 3. 6. 4. यावदादित्यः पुरस्तादुदेता 3. 7. 4.
3. 8. 4. पुरस्तादस्तमेता 3. 9. 4.
5. 2. 2. पुरस्ताचोपरिष्टाचाद्भिः परिदधाति
6. 8. 6. तदुक्तं पुरस्तादेव
6. 10. 1. पुरस्तात्प्राच्यः स्यन्दन्ते
7. 25. 1. स पुरस्तात् . अहं पुरस्तात्
2. आत्मा पुरस्तात्
Brih. 1. 1. 2. अश्वं पुरस्तान्महिमान्वजायत
Katha. 1. 11. यथा पुरस्ताद्भविता प्रतीतः
Maitri. 1. 2. एतद्वृत्तं पुरस्तात्
6. 9. अद्भिः पुरस्तात्परिदधाति
7. 1. पुरस्तादुद्यन्ति
8. व्राट्ये पुरस्तादुक्ते ऽपि
Mund. 2. 2. 11. ब्रह्मैवेदममृतं पुरस्तात्
Mahânâr. 10. 3. यो देवानां प्रथमं पुरस्तात्
Nrip. 2. 4. एकः पुरस्ताद्य इदं बभूव
5. 2. तस्य पुरस्ताद्वसव आसते
Nrisut. 9. सदेव पुरस्तात्
— सत्यं हीत्थं पुरस्तात्
Nrisut. 9. एतौ हि पुरस्तात्सुविभातमव्यवहार्यमद्वयम्
Śiras. 3. सोमसूर्यः पुरस्तात्
Brahma. 2. यत्सहजं पुरस्तात्
Gîtâ. 11. 40. नमः पुरस्तादथ पृष्ठतस्ते

## पुरा

Kaush. 4. 13. न पुरा कालात् सम्मोहमेति
14. न पुरा कालात् प्रैति
Chhâ. 2. 9. 2. तस्य यत्पुरोदयात् स हिंकारः
2. 24. 3. पुरा प्रातरनुवाकस्योपाकरणात्
7. पुरा माध्यन्दिनस्य सवनस्योपाकरणात्
11. पुरा तृतीयसवनस्योपाकरणात्
4. 16. 2. पुरा परिधानीयायाः
4. न पुरा परिधानीयायाः
5. 3. 7. इयं न प्राक् त्वत्तः पुरा विद्या ब्राह्मणान् गच्छति
Brih. 1. 2. 4. न ह पुरा ततः संवत्सर आस
2. 1. 10. नैनं पुरा कालात्प्राणो जहाति
12. नैनं पुरा कालान्मृत्युरागच्छति
6. 2. 3. नो भवान् पुरानुशिष्टानवोचत्
Katha. 1. 21. देवैरत्रापि विचिकित्सितं पुरा
Mund. 1. 1. 2. तां पुरोवाचाङ्गिरे
3. 2. 11. एतत् सत्यमृषिरङ्गिराः पुरोवाच
Chûl. 4. तेनैवाधिष्ठिता पुरा
Krish. 7. अप्यजेन साजिता पुरा
Gîtâ. 3. 3. पुरा प्रोक्ता मयानघ
10. पुरोवाच प्रजापतिः
17. 23. यज्ञाश्च विहिताः पुरा

## पुराकल्प

Śwet. 6. 22. पुराकल्पे प्रचोदितम्

## पुराकृत

Maitri. 4. 2. महानदीषूर्मय इवनिवर्त्तकमस्य यत्पुराकृतम्

## 1. पुराण *adj.*

Bṛih. 4. 4. 8. अणुः पन्था विततः पुराणः
18. ते निचिक्युर्ब्रह्म पुराणम्
5. 1. 1. खं पुराणं वायुरं खम्

Kaṭha. 2. 12. गुहाहितं गह्वरेष्ठं पुराणम्
18. शाश्वतो ऽयं पुराणः Gîtâ. 2. 20.

Śwet. 3. 21. वेदाहमेतमजरं पुराणम्
4. 18. प्रज्ञा च तस्मात्प्रसृता पुराणी

Mahânâr. 1. 5. विश्वं पुराणं तमसः परस्तात्

Śiras. 5. शाश्वतं वै पुराणमिषम्
— शाश्वतेन वै पुराणेन . . ऊर्जेन

Gîtâ. 8. 9. कविं पुराणमनुशासितारम्
11. 38. त्वमादिदेवः पुरुषः पुराणः
15. 4. यतः प्रवृत्तिः प्रसृता पुराणी

## 2. पुराण

Bṛih. 2. 4. 10. इतिहासः पुराणम् 4. 1. 2; 4. 5. 11; Maitri. 6. 32, 33.

Nṛip. 5. 9. स पुराणान्यधीते

## पुरातन

Kaivalya. 20. पुरातनो ऽहं पुरुषो ऽहमीशः

Gîtâ. 4. 3. योगः प्रोक्तः पुरातनः

## पुरिशय

Bṛih. 2. 5. 18. अयं पुरुषः सर्वासु पूर्षु पुरिशयः

Praśna. 5. 5. परात्परं पुरिशयं पुरुषमीक्षते

## पुरी

Râmap. 45. पुरीं लंकां समाययौ

## पुरीतत्

Kaush. 4. 19. हृदयात्पुरीततमभिप्रतन्वन्ति

Bṛih. 2. 1. 19. हृदयात्पुरीततमभिप्रतिष्ठन्ते
— पुरीतति शेते

## पुरीष

Chhâ. 6. 5. 1. तस्य यः स्थविष्ठो धातुस्तत् पुरीषं भवति

## पुरीषिन्

Praśna. 1. 11. दिव आहुः परे अर्द्धे पुरीषिणम्

## पुरुजित्

Gîtâ. 1. 5. पुरुजित्कुन्तिभोजश्च

## पुरुरूप

Bṛih. 2. 5. 19. इन्द्रो मायाभिः पुरुरूपः

## पुरुष

Ait. 1. 3. अद्भ्य एव पुरुषं समुद्धृत्य
2. 3. ताभ्यः पुरुषमानयत्ता अब्रुवन् सुकृतं बतेति पुरुषो वाव सुकृतम्
3. 13. एतमेव पुरुषं ब्रह्म ततममपश्यत्
4. 1. पुरुषे ह वा अयमादितो गर्भो भवति
5. 3. अश्वा गावः पुरुषा हस्तिनः

Kaush. 1. 2. पुरुषो वान्यो वा
2. 5. यावद्वै पुरुषो भाषते
— यावद्वै पुरुषः प्राणिति
3. 3. यत्रैतत्पुरुषः सुप्तः स्वप्नं न कंचन पश्यति
— यत्रैतत्पुरुष आर्त्तो मरिष्यन्
4. 3. य एवैष आदित्ये पुरुषस्तमेवाहमुपासे

Kaush. 4. 4. य एवैष चन्द्रमसि पुरुषः
5. य एवैष विद्युति पुरुषः
6. य एवैष स्तनयित्नौ पुरुषः
7. य एवैष वायौ पुरुषः
8. य एवैष आकाशे पुरुषः
9. य एवैषो ऽग्नौ पुरुषः
10. य एवैषो ऽप्सु पुरुषः
11. य एवैष आदर्शे पुरुषः
12. य एवैष छायायां पुरुषः
13. य एवैष प्रतिश्रुत्कायां पुरुषः
14. य एवैष शब्दे पुरुषः
15. य एवैतत्पुरुषः सुप्तः स्वप्नया चरति
16. य एवैष शरीरे पुरुषः
17. य एवैष दक्षिणे ऽक्षिणि पुरुषः
18. य एवैष सव्ये ऽक्षिणि पुरुषः
19. यो वै बालाक एतेषां पुरुषाणां कर्त्ता
— तौ ह सुप्तं पुरुषमाजग्मतुः
— क्वैष एतद्बालाके पुरुषो ऽशयिष्ट
— यत्रैष एतद्बालाके पुरुषो ऽशयिष्ट
— हिता नाम पुरुषस्य नाड्यः

Chhâ. 1. 1. 2. ओषधीनां पुरुषो रसः पुरुषस्य वाग्रसः
1. 6. 6. य एषो ऽन्तरादित्ये हिरण्मयः पुरुषो दृश्यते
1. 7. 5. य एषो ऽन्तरक्षिणि पुरुषो दृश्यते सैवर्क्
2. 6. 1. पुरुषो निधनम् 2. 18. 1.
2. 9. 7. ते पुरुषं दृष्ट्वा कक्षं श्वभ्रमित्युपद्रवन्ति
3. 12. 3. इयं वाव सा यदिदमस्मिन् पुरुषे शरीरम्

Chhâ. 3. 12. 4. यद्वैतत्पुरुषे शरीरमिदं वाव तद्यदिदमस्मिन्नन्तः पुरुषे हृदयम्
6. तावानस्य महिमा ततो ज्यायांश्च पुरुषः
7. यो ऽयं बहिर्द्धा पुरुषादाकाशः
8. अयं वाव स यो ऽयमन्तःपुरुष आकाशः
3. 13. 7. इदं वाव तद्यदिदमस्मिन्नन्तःपुरुषे ज्योतिः
3. 14. 1. अथ खलु क्रतुमयः पुरुषो यथाक्रतुरस्मिँल्लोके पुरुषो भवति
3. 16. 1. पुरुषो वाव यज्ञः
4. 10. 3. बहव इमे ऽस्मिन्पुरुषे कामा नानात्ययाः
4. 11. 1. य एष आदित्ये पुरुषो दृश्यते
4. 12. 1. य एष चन्द्रमसि पुरुषो दृश्यते
4. 13. 1. य एष विद्युति पुरुषो दृश्यते
4. 15. 1. य एषो ऽक्षिणि पुरुषो दृश्यते 8. 7. 4.
5. तत् पुरुषो ऽमानवः 5. 10. 2.
5. 7. 1. पुरुषो वाव . . अग्निः
5. 11. 6. येन हैवार्थेन पुरुषश्चरेत्
6. 2. 3. यत्र क्व च शोचति स्वेदते वा पुरुषः
6. 4. 7. तिस्रो देवताः पुरुषं प्राप्य 6. 8. 6.
6. 7. 1. षोडशकलः सोम्य पुरुषः
6. 8. 1. यत्रैतत्पुरुषः स्वपिति
3. यत्रैतत्पुरुषो ऽशिशिषति
5. यत्रैतत्पुरुषः पिपासति
6. पुरुषस्य प्रयतो वाङ्मनसि सम्पद्यते

Chhā. 6. 14. 1. पुरुषं गन्धारेभ्यो ऽभिनद्धाक्षमानीय
2. आचार्यवान् पुरुषो वेद
6. 15. 1. पुरुषं . . उपतापिनं ज्ञातयः पर्युपासते
6. 16. 1. पुरुषं . . हस्तगृहीतमानयन्ति
8. 12. 3. स उत्तमः पुरुषः
4. स चाक्षुषः पुरुषः
Bṛih. 1. 4. 1. पूर्वः . . पाप्मन औषत्तस्मात्पुरुषः
10. एकैकः पुरुषो देवान् भुनक्ति
17. पांक्तः पुरुषः
1. 5. 2. पुरुषो वा अक्षितिः
15. यो ऽयमेवंवित्पुरुषः
2. 1. 2. आदित्ये पुरुष एतं . . ब्रह्मोपासे
3. चन्द्रे पुरुष एतं . . ब्रह्मोपासे
4. विद्युति पुरुष एतं . . ब्रह्मोपासे
5. आकाशे पुरुष एतं . . ब्रह्मोपासे
6. वायौ पुरुष एतं . . ब्रह्मोपासे
7. अग्नौ पुरुष एतं . . ब्रह्मोपासे
8. अप्सु पुरुष एतं . . ब्रह्मोपासे
9. आदर्शे पुरुष एतं . . ब्रह्मोपासे
11. दिक्षु पुरुष एतं . . ब्रह्मोपासे
12. छायामयः पुरुष एतं . ब्रह्मोपासे
13. आत्मनि पुरुष एतं . . ब्रह्मोपासे
15. तौ ह पुरुषं सुप्तमाजग्मतुः
16. य एष विज्ञानमयः पुरुषः 17.
17. अथ हैतत्पुरुषः स्वपिति नाम

Bṛih. 2. 3. 3. य एष एतस्मिन्मण्डले पुरुषः 5. 5. 2, 3.
5. यो ऽयं दक्षिणे ऽक्षन्पुरुषः 1. 2. 2; 5. 5. 2, 4.
6. तस्य हैतस्य पुरुषस्य रूपम्
2. 5. 1. तेजोमयो ऽमृतमयः पुरुषः (28 times).
18. पुरः पुरुष आविशत्
— अयं पुरुषः सर्वासु पूर्षु पुरिशयः
3. 2. 11. यत्रायं पुरुषो म्रियते 12.
13. पुरुषस्य मृतस्याग्निं वागप्येति
— क्वायं तदा पुरुषो भवतीति
3. 7. 2. पुरुषं प्रेतमाहुर्व्यस्रंसिषतास्याङ्गानीति
3. 9. 4. दशेमे पुरुषे प्राणाः
10. यो वै तं पुरुषं विद्यात् . . वेद वा अहं तं पुरुषम् 11—17.
— शारीरः पुरुषः स एषः
11. काममयः पुरुषः स एषः
12. आदित्ये पुरुषः स एषः
13. प्रातिश्रुत्कः पुरुषः स एषः
14. छायामयः पुरुषः स एषः
15. आदर्शे पुरुषः स एषः
16. अप्सु पुरुषः स एषः
17. पुत्रमयः पुरुषः स एषः
26. अष्टौ देवा अष्टौ पुरुषाः
— यस्तान्पुरुषान्निरुह्य प्रत्युह्यात्यक्रामत्तं त्वौपनिषदं पुरुषं पृच्छामि
28. यथा वृक्षः . . तथैव पुरुषः
4. 3. 2. किंज्योतिरयं पुरुषः 3—6.
7. हृद्यन्तर्ज्योतिः पुरुषः
8. अयं पुरुषो जायमानः
9. एतस्य पुरुषस्य द्वे एव स्थाने

Bṛih. 4. 3. 9. अत्रायं पुरुषः स्वयंज्योतिर्भवति 14.
11. हिरण्मयः पुरुष एकहंसः 12
15. असङ्गो ह्ययं पुरुषः 16.
18. अयं पुरुष एतावुभावन्तावनुसञ्चरति
19. अयं पुरुष एतस्मा अन्ताय धावति
21. एवमेवायं पुरुषः प्राज्ञेनात्मना सम्परिष्वक्तः
36. अयं पुरुष एभ्यो ऽङ्गेभ्यः सम्प्रमुच्य
4. 4. 1. यत्रैष चाक्षुषः पुरुषः पराङ्पर्यावर्त्तते
5. काममय एवायं पुरुष इति
5. 6. 1. मनोमयो ऽयं पुरुषो भाः सत्यः
5. 9. 1. अयमग्निर्वैश्वानरो यो ऽयमन्तः पुरुषे Maitri. 2. 6.
5. 10. 1. यदा वै पुरुषो ऽस्माल्लोकात्प्रैति
5. 15. 1. यो ऽसावसौ पुरुषः सो ऽहमस्मि Iśâ. 16.
6. 2. 12. पुरुषो वा अग्निर्गौतम
13. तस्या आहुत्यै पुरुषः संभवति
14. अग्नौ देवाः पुरुषं जुह्वति तस्या आहुत्यै पुरुषो भास्वरवर्णः संभवति
15. पुरुषो मानस एत्य
6. 3. 1. घ्नन्ति पुरुषस्य कामान्
6. 4. 1. फलानां पुरुषः पुरुषस्य रेतः
Tait. 1. 6. 1. तस्मिन्नयं पुरुषो मनोमयः
2. 1. 1. अन्नात्पुरुषः स वा एष पुरुषो ऽन्नरसमयः
2. 8. 1. स यश्चायं पुरुषे यश्चासावादित्ये स एकः 3. 10. 4.

Kaṭha. 1. 8. एतद्वृङ्क्ते पुरुषस्याल्पमेधसः
2. 1. उभे नानार्थे पुरुषं सिनीतः
3. 11. अव्यक्तात्पुरुषः परः पुरुषान्न परं किञ्चित्
4. 12. अंगुष्ठमात्रः पुरुषः 13; 6. 17; Śwet. 3. 13; Mahânâr 16. 3.
5. 8. कामं कामं पुरुषो निर्मिमाणः
6. 8. अव्यक्तात्परः पुरुषः
Śwet. 1. 2. भूतानि योनिः पुरुष इति चिन्त्यम्
3. 6. मा हिंसीः पुरुषं जगत्
8. वेदाहमेतं पुरुषं महान्तम्
9. तेनेदं पूर्णं पुरुषेण सर्वम् Mahânâr. 10. 4.
12. महान् प्रभुर्वै पुरुषः
14. सहस्रशीर्षा पुरुषः
15. पुरुष एवेदं सर्वम्
19. तमाहुरग्र्यं पुरुषम्
4. 7. समाने वृक्षे पुरुषो निमग्नः Muṇḍ. 3. 1. 2.
Maitri. 2. 6. यदौष्ण्यं स पुरुषो ऽथ यः पुरुषः सो ऽग्निर्वैश्वानरः
3. 3. एतानि गुणानि पुरुषेणेरितानि
— नाभिभूयत्यसौ पुरुषः
4. 6. अथ कृत्स्नक्षय एकत्वमेति पुरुषस्य
6. 1. य एषो ऽन्तरादित्ये हिरण्मयः पुरुषः Mahânâr. 12. 2.
6. चक्षुरायत्ता हि पुरुषस्य महती मात्रा
— अक्षिण्यवस्थितो हि पुरुषः सर्वार्थेषु चरति
10. पुरुषश्चेता प्रधानान्तःस्थः
— भोक्ता पुरुषो ऽन्तःस्थः
— तस्माद्भोक्ता पुरुषः

Maitri. 6. 10. पुरुषो ह्यव्यक्तमुखेन त्रिगुणं भुंक्ता इति
18. यदा पश्यन् पश्यति . . पुरुषम्
30. स हि सर्वकाममयः पुरुषः
— अतः पुरुषो ऽध्यवसायसङ्कल्पाभिमानलिङ्गः
35. यो ऽसा आदित्ये पुरुषः सो ऽसा अहम्
— तच्छुक्रं पुरुषमलिङ्गम्
7. 11. पुरुषश्चाक्षुषो यो ऽयम्
Mund. I. 1. 7. यथा सतः पुरुषात्केशलोमानि
1. 2. 11. यत्रामृतः स पुरुषो ह्यव्ययात्मा
13. येनाक्षरं पुरुषं वेद सत्यम्
2. 1. 2. दिव्यो ह्यमूर्त्तः पुरुषः
5. बह्वीः प्रजाः पुरुषात् सम्प्रसूताः
10. पुरुष एवेदं विश्वम्
3. 1. 3. यदा पश्यः पश्यते . . पुरुषम्
3. 2. 1. उपासते पुरुषं ये ह्यकामाः
8. परात्परं पुरुषमुपैति दिव्यम्
Mahânâr. 1. 4. यत ओषधीभिः पुरुषान्पशूंश्च
8. सर्वे निमेषा जज्ञिरे विद्युतः पुरुषादधि
2. 9. मा नो हिंसीज्जातवेदो गामश्वं पुरुषं जगत्
3. 1. तत्पुरुषस्य विद्महे
2. तत्पुरुषाय विद्महे 3, 4, 15; 17. 4.
11. 2. विश्वमेवेदं पुरुषस्तद्विश्वमुपजीवति Mahâ. 3 (पुरुषम्)
12. 1. पुरुषं कृष्णपिंगलम्

Mahânâr. 12. 2. य एष एतस्मिन्मण्डले ऽर्चिषि पुरुषः
3. य एष पुरुष एष भूतानामधिपतिः
13. 2. पुरुषो वै रुद्रस्तन्महः
20. 21. उत्तिष्ठ पुरुष
23. 1. य एष आदित्ये पुरुषः स परमेष्ठी ब्रह्मात्मा
— स वा एष पुरुषः पञ्चधा पञ्चात्मा
Prasna. 3. 3. यथैषा पुरुषे छाया
8. सैषा पुरुषस्यापानमवष्टभ्य
4. 1. एतस्मिन्पुरुषे कानि स्वपन्ति
2. तर्ह्येष पुरुषो न शृणोति न पश्यति
9. एष हि . . विज्ञानात्मा पुरुषः
5. 5. ओमित्येतेनैवाक्षरेण परं पुरुषमभिध्यायीत
— परात्परं पुरिशयं पुरुषमीक्षते
6. 1. षोडशकलं . . पुरुषं वेत्थ
— तं त्वा पृच्छामि क्वासौ पुरुष इति
2. इहैवान्तःशरीरे . . स पुरुषः
5. पुरुषं प्राप्यास्तं गच्छन्ति
— पुरुष इत्येवं प्रोच्यते
6. तं वेद्यं पुरुषं वेद
Kaivalya. 1. परात्परं पुरुषं याति
20. पुरातनो ऽहं पुरुषो ऽहमीशः
Gauda. 1. 6. चेतोंशून् पुरुषः पृथक्
Nrip. 1. 1. यत् पुरुषो मनसाभिगच्छति
4. अन्तरादित्ये हिरण्मयः पुरुषः
6. पुरुषं नृकेसरिविग्रहम्
4. 3. यो वै नृसिंहः . . यश्च पुरुषस्तस्मै वै नमो नमः (4)

Nrip. 5. 1. षोडशकलो वै पुरुषः पुरुष एवेदं सर्वं पुरुषेण सम्मितं भवति

Chûl. 12. आत्मा पुरुष एव च

— श्यावश्च पुरुषस्तथा (Nârâyaṇa seems to read सासुरस्तथा for he says असुरैर्बाणादिभिः सहितः सासुरः)

14. पुरुषं निर्गुणं सांख्यम्

Siras. 3. सूक्ष्मः पुरुषः सर्वम्

— प्राजापत्यं सौम्यं सूक्ष्मं पुरुषम्

Garbha. 3. पितू रेतोतिरेकात् पुरुषः

Mahâ. 1. तस्मिन्पुरुषाश्चतुर्दशाजायन्ते

— स एष पञ्चविंशकः पुरुषस्तं पुरुषं पुरुषो निवेश्य

2. त्र्यक्षः शूलपाणिः पुरुषो ऽजायत

3. पुरुषः परमात्मा व्यवस्थितः

Brahma. 1. पुरुषः प्राणो हिंसा

2. अस्य पुरुषस्य चत्वारि स्थानानि

— स पुरुषः स प्राणः स जीवः

Prâṇâg. 2. महानत्रो ऽयं पुरुषः

Nila. 5. मा हिंसीत् पुरुषान्मम

Dhyâna. 9. पुरुषस्य शरीरे तु

Nyâsa. 2. सह तेनैव पुरुषः

Nâr. 1. पुरुषो ह वै नारायणः

5. प्रत्यगानन्दं ब्रह्म पुरुषम् Atmapra. 1.

Gopî. 5. गोपीचन्दनलिप्ताङ्गं पुरुषं य उपासते

— गोपीचन्दनलिप्ताङ्गः पुरुषो येन पूज्यते

Mukti. 1. मुमुक्षवः पुरुषाः

2. पुरुषस्य . . चित्तधर्माः

Mukti. 2. तत्पुरुषप्रयत्नसाध्यम्

— *vide* समाधि

2. 59. तादृग्रूपो हि पुरुषः

Gitâ. 2. 15. यं हि न व्यथयन्त्येते पुरुषम्

21. कथं स पुरुषः पार्थ

60. पुरुषस्य विपश्चितः

3. 4. नैष्कर्म्यं पुरुषो ऽश्नुते

8. 4. पुरुषश्चाधिदैवतम्

8. परमं पुरुषं दिव्यम्

10. स तं परं पुरुषमुपैति दिव्यम्

22. पुरुषः स परः पार्थ

9. 3. अश्रद्दधानाः पुरुषाः

10. 12. पुरुषं शाश्वतं दिव्यम्

11. 18. सनातनस्त्वं पुरुषो मतो मे

38. त्वमादिदेवः पुरुषः पुराणः

13. 19. प्रकृतिं पुरुषं चैव

20. पुरुषः सुखदुःखानां भोक्तृत्वे हेतुः

21. पुरुषः प्रकृतिस्थो हि

22. देहे ऽस्मिन्पुरुषः परः

23. य एवं वेत्ति पुरुषम्

15. 4. तमेव चाद्यं पुरुषं प्रपद्ये

16. द्वाविमौ पुरुषौ लोके

17. उत्तमः पुरुषस्त्वन्यः

17. 3. श्रद्धामयो ऽयं पुरुषः

## पुरुषदेवत्य

Sikhâ. 1. चतुर्थी विद्युन्मती . . पुरुषदेवत्या

## पुरुषनाय

Chhâ. 6. 8. 3. अश्वनायः पुरुषनायः 5.

## पुरुषयुग

Siras. 7. आसप्तमात्पुरुषयुगात्पुनाति Mahâ. 4.

## पुरुषरूप

Brih. 4. 2. 3. वामे ऽक्षिणि पुरुषरूपम्

## पुरुषर्षभ

Gîtâ. 2. 15. यं हि न व्यथयन्त्येते . . पुरुषर्षभ

## पुरुषवचस्

Chhâ. 5. 3. 3. वेत्थ यथा पञ्चम्यामाहुतावापः पुरुषवचसो भवन्ति

5. 9. 1. इति तु पञ्चम्यामाहुतावापः पुरुषवचसो भवन्ति

## पुरुषवाच्

Bṛih. 6. 2. 2. वेत्थो यतिथ्यामाहुत्यां हुतायामापः पुरुषवाचो भूत्वा समुत्थाय वदन्ती ३

## पुरुषविद्

Maitri. 6. 33. पुरुषविदः प्रजापतेः (ter).

## पुरुषविध

Bṛih. 1. 4. 1. आत्मैवेदमग्र आसीत्पुरुषविधः

Tait. 2. 2. 1. स वा एष पुरुषविध एव तस्य पुरुषविधतामन्वयं पुरुषविधः 2. 3. 1; 2. 4. 1; 2. 5. 1.

## पुरुषविधता

Tait. 2. 2. 1. तस्य पुरुषविधतामन्वयं पुरुषविधः 2. 3. 1; 2. 4. 1; 2. 5. 1.

## पुरुषव्याघ्र

Gîtâ. 18. 4. त्यागो हि पुरुषव्याघ्र

## पुरुषशरीर

Prâṇâg. 1. अस्मिन्नेव पुरुषशरीरे

## पुरुषसंज्ञ

Maitri. 2. 5. अमात्यो ऽदृश्यः पुरुषसंज्ञः

## पुरुषाग्नि

Bṛih. 6. 2. 16. ते पुनः पुरुषाग्नौ हूयन्ते

## पुरुषायण

Praśna. 6. 5. एवमेवास्य परिद्रष्टुरिमाः षोडशकलाः पुरुषायणाः

## पुरुषायतन

Kshur. 10. पुरुषायतनं महत्

## पुरुषार्थ

Chûl. 4. स्तूयते पुरुषार्थं च

## पुरुषोत्तम

Dhyâna 2. यथा दीपो दृश्यते पुरुषोत्तमः (one MS. omits); Yogat. 2.

Yogat. 11. पुरुषोत्तमतत्परः

Gopî. 5. पुरुषोत्तमरूपेण

Gîtâ. 8. 1. किं कर्म पुरुषोत्तम

10. 15. वेत्थ त्वं पुरुषोत्तम

11. 3. रूपमैश्वरं पुरुषोत्तम

15. 18. प्रथितः पुरुषोत्तमः

19. जानाति पुरुषोत्तमम्

## पुरुहूत

Mahânâr. 20. 3. ह्वयामि शक्रं पुरुहूतमिन्द्रम्

## पुरोडाश

Maitri. 6. 36. *vide* आदि

## पुरोधस्

Gîtâ. 10. 24. पुरोधसां च मुख्यं माम्

## पुरोऽनुवाक्या

Bṛih. 3. 1. 7. पुरोऽनुवाक्या च याज्या च शस्यैव तृतीया 10.

10. प्राण एव पुरोऽनुवाक्या — पृथिवीलोकमेव पुरोऽनुवाक्यया जयति

## पुरोवात

Chhâ. 2. 3. 1. पुरोवातो हिंकारः

## पुष्

Bṛih. 1. 4. 13. इयं हीदं सर्वं पुष्यति
6. 4. 24. अस्मिन् सहस्रं पुष्यासम्
27. येन विश्वा पुष्यसि वार्याणि
Piṇḍa. 7. वाचं पुष्यति वीर्यवान्
Râmap. 27. पुष्टः कोशलजात्मजः
Mukti. 2. 45. एतास्ता युक्तयः पुष्टाः
Gîtâ. 15. 13. पुष्णामि चौषधीः सर्वाः

## पुष्कर

Maitri. 3. 2. बिन्दुरिव पुष्करा इति
6. 2. कः पुष्करः किम्मयो वेति — इदं वाव तत्पुष्करं यो ऽयमाकाशः
Siras. 1. पुष्करमहं पवित्रमहम्
Brahma. 1. खगः कर्कटकः पुष्करः
Brahmab. 15. तावत्तिष्ठति पुष्करे

## पुष्करपर्ण

Nṛip. 1. 1. स प्रजापतिरेकः पुष्करपर्णे समभवत्

## पुष्करपलाश

Chhâ. 4. 14. 3. यथा पुष्करपलाश आपो न श्लिष्यन्ते

## पुष्करस्रज्

Bṛih. 6. 4. 21. गर्भं ते अश्विनौ देवावाधत्तां पुष्करस्रजौ
Mahânâr. 16. 5. मेधां मे अश्विनावुभावाधत्तां पुष्करस्रजौ

## पुष्करिणी

Bṛih. 4. 3. 10. न तत्र . . पुष्करिण्यः . . भवन्त्यथ . . पुष्करिण्यः . . सृजते
6. 4. 23. यथा वायुः पुष्करिणीं समिङ्गयति

## पुष्कल

Sarvop. 1. मनआदिचतुर्दशकरणैः पुष्कलैः
Gîtâ. 11. 21. स्तुवन्ति त्वां स्तुतिभिः पुष्कलाभिः

## पुष्टि

Mahânâr. 4. 7. मृत्तिके देहि मे पुष्टिम्
19. 1. श्रीश्च पुष्टिश्चानृण्यम्
20. 1. मयि पुष्टिं पुष्टिपतिर्दधातु
Siras. 3. शान्तिस्त्वं पुष्टिस्त्वम्

## पुष्टिकाम

Mahânâr. 20. 1. तेभ्यो बलिं पुष्टिकामो हरामि

## पुष्टिपति

Mahânâr. 20. 1. मयि पुष्टिं पुष्टिपतिर्दधातु

## पुष्टिमन्त्

Chhâ. 5. 16. 1. तस्मात्त्वं रयिमान् पुष्टिमानसि

## पुष्प

Kaush. 1. 3. पुष्पाण्यादाय
Chhâ. 3. 1. 2. ऋग्वेद एव पुष्पम्
3. 2. 1. यजुर्वेद एव पुष्पम्
3. 3. 1. सामवेद एव पुष्पम्
3. 4. 1. इतिहासपुराणं पुष्पम्
3. 5. 1. ब्रह्मैव पुष्पम्
Bṛih. 6. 4. 1. ओषधीनां पुष्पाणि पुष्पाणां फलानि
Dhyâna. 7. पुष्पमध्ये यथा गन्धम् Yogat. 8.
9. पुष्पे गन्धमिवार्पितम्
Asrama. 3. पुष्पफलमुत्सृजन्तः
Vâsu. 3. यथा गन्धः पुष्पेषु
Gîtâ. 9. 26. पत्रं पुष्पं फलं तोयम्

## पुष्पित

Gîtâ. 2. 42. यामिमां पुष्पितां वाचम्

## पुष्पिन्

Prâṇâg. 1. अपुष्पा याश्च पुष्पिणीः

## पू

Chhâ. 4. 16. 1. एष ह वै यज्ञो यो ऽयं पवत एष ह यन्निदं सर्वं पुनाति
— यदेष यन्निदं सर्वं पुनाति तस्मादेष एव यज्ञः
5. 10. 10. शुद्धः पूतः पुण्यलोको भवति
Bṛih. 1. 3. 13. वायुः परेण मृत्युमतिक्रान्तः पवते
3. 9. 8. कतमो ऽध्यर्द्ध इति योऽयं पवत इति
9. यदयमेक इवैव पवते ऽथ कथमध्यर्द्धः
5. 14. 8. शुद्धः पूतो ऽजरो ऽमृतः सम्भवति
Tait. 2. 8. 1. भीषास्माद्वातः पवते Nṛip. 2. 4.
Maitri. 2. 4. शुद्धः पूतः शून्यः 6. 28. 31.
6. 9. उच्छिष्टोपहतमित्यनेन तत्पावयेत्
— पुनन्त्वन्नं मम दुष्कृतं च यदन्यत्
7. 4. अन्तःशुद्धः पूतः शून्यः
6. शुद्धः पूतो भान्तः क्षान्तः
Muṇḍ. 2. 1. 6. सोमो यत्र पवते यत्र सूर्यः
Mahânâr. 4. 12. तन्मे इन्द्रो वरुणो बृहस्पतिः सविता च पुनन्तु
5. 8. इमास्तदापो वरुणः पुनातु
12. पुनन्तु ऋषयः पुनन्तु वसवः पुनातु वरुणः पुनात्वघमर्षणः
14. 2. आपः पुनन्तु पृथिवीं पृथिवी पूता पुनातु मां पुनन्तु ब्रह्मणस्पतिर्ब्रह्मपूता पुनातु माम् Prâṇâg. 1.
— सर्वं पुनन्तु मामापः Prâṇâg. 1.
Mahânâr. 17. 6. आसहस्रात्पंक्तिं पुनन्ति 7. 8.
19. 1. तिलाः पुनन्तु मे पापम्
Kaivalya. 24. सुरापानात्पूतो भवति
— ब्रह्महत्यायाः पूतो भवति
— सुवर्णस्तेयात्पूतो भवति
— कृत्याकृत्यात्पूतो भवति
Śiras. 6. मस्तिष्कादूर्ध्वः प्रैरयत्पवमानः
7. आचक्षुषः पंक्तिं पुनाति Mahâ. 4.
— आसप्तमात्पुरुषयुगात्पुनाति Mahâ. 4.
— शुचिः पूतः कर्मण्यो भवति
Nyâsa. 4. अद्भिः पूताभिराचरेत् Kaṭhaśru. 4.
Kâlâg. 2. समस्तमहापातकोपपातकेभ्यः पूतो भवति
Âtmapra. 1. तस्मिन्मां धेहि पवमान
Vâsu. 4. सर्वमहापातकेभ्यः पूतो भवति
Gopî. 5. तं तं पूतं विजानीयात्
— पुनात्यादशमं कुलम्
Gîtâ. 4. 10. बहवो ज्ञानतपसा पूताः
10. 31. पवनः पवतामस्मि

## पूज्

Vâsu. 4. सर्वैर्देवैः पूज्यो भवति
Gopî. 5. गोपीचन्दनलिप्ताङ्गः पुरुषो येन पूज्यते
— विष्णुपूजितभूतित्वात्
Skanda. 11. सोहम्भावेन पूजयेत्
Râmap. 17. सीतारामौ . . पूज्यौ
38. पूजितावीरपुत्रेण
57. वह्निस्तदायुधैः पूज्यः
90. अंगव्यूहानिलजाद्यैः पूज्य
91. मुख्योपहारैर्विविधैः पूज्य
Gîtâ. 11. 43. त्वमस्य पूज्यश्च गुरुर्गरीयान्

## पूजन

Râmap. 5. ऐश्वर्यं यस्य पूजनात्
Gîtâ. 17. 14. देवद्विजगुरुप्राज्ञपूजनम्

## पूजा

Râmap. 13. विना यन्त्रेण नेत्पूजा
Gîtâ. 17. 18. सत्कारमानपूजार्थम्

## पूजार्ह

Gîtâ. 2. 4. पूजार्हावरिसूदन

## पूतपाप

Gîtâ. 9. 20. त्रैविद्या मां सोमपाः पूतपापाः

## पूति

Gîtâ. 17. 10. पूतिपर्युषितं च यत्

## पूय्

Brih. 5. 12. 1. पूयति वा अन्नमृते प्राणात्

## पूरक

Amrita. 9. रेचकपूरककुम्भकाः
12. पूरकस्येति लक्षणम्
Dhyâna. 11. पूरकेण विचिन्तयेत्

## पूरुष

Brih. 4. 4. 12. अयमस्मीति पूरुषः
Gîtâ. 3. 19. परमाप्नोति पूरुषः
36. पापं चरति पूरुषः

## पूर्णानन्द

Parama. 3. पूर्णानन्दैकरूपरसबोधः (MSS.)
Râmot. 5. पूर्णानन्दैकविज्ञानम्

## पूर्त्त

Śwet. 2. 7. न हि ते पूर्त्तमक्षिपत् (so Nârâyaṇa and Saṁkarânanda).

## पूर्व

Kaush. 1. 5. बृहद्रथन्तरे सामनी पूर्वौ पादौ
Kaush. 1. 5. तस्य भूतं च भविष्यच्च पूर्वौ पादौ
2. 5. एतत् पूर्वे विद्वांसो ऽग्निहोत्रं न जुहवांचक्रुः
8. न ह्यस्मात् पूर्वाः प्रजाः प्रैति
10. न ह्यस्याः पूर्वाः प्रजाः प्रैति
Kena. 3. इति शुश्रुम पूर्वेषाम्
Chhâ. 6. 4. 5. पूर्वे महाशाला महाश्रोत्रियाः
7. 11. 1. तेज एव तत्पूर्वं दर्शयित्वा (bis).
Brih. 1. 1. 2. तस्य पूर्वे समुद्रे योनिः
1. 4. 1. स यत्पूर्वो ऽस्मात्सर्वस्मात् — यो ऽस्मात्पूर्वो बुभूषति
4. 3. 1. तं सम्राडेव पूर्वः पप्रच्छ
18. पूर्वं च परं च
4. 4. 22. पूर्वे विद्वांसः प्रजां न कामयन्ते
6. 2. 7. वाचा ह स्म वै पूर्व उपयन्ति
8. इयं विद्येतः पूर्वं न कस्मिंश्चन ब्राह्मण उवास
Iśâ. 4. नैनद्देवा आप्नुवन् पूर्वमर्षत्
Tait. 2. 3. 1. तस्यैष एव शारीर आत्मा यः पूर्वस्य 2. 4. 1; 2. 5. 1; 2. 6. 1.
3. 10. 6. पूर्वं देवेभ्यो ऽमृतस्य ना ३ भायि Nṛip. 2. 4.
Katha. 1. 6. अनुपश्य यथा पूर्वे
1. 6. यः पूर्वं तपसो जातमद्भ्यः पूर्वमजायत
Śwet. 2. 16. पूर्वो हि जातः स उ गर्भे अन्तः Mahânâr. 2. 1; Śiras. 5.
3. 4. हिरण्यगर्भं जनयामास पूर्वम्
5. 6. ये पूर्वं देवा ऋषयश्च तद्विदुः
6. 5. देवं स्वचित्तस्थमुपास्य पूर्वम्

Swet. 6. 18. यो ब्रह्माणं विदधाति पूर्वम्
Maitri. 1. 1. ब्रह्मयज्ञो वा एष यत्पूर्वेषां चयनम्
6. 21. परः पूर्वं प्रतिष्ठाप्य
Gauḍa. 2. 16. जीवं कल्पयते पूर्वम्
4. 21. कथं पूर्वं न गृह्यते
Nṛip. 2. 1. प्रणवस्य या पूर्वा मात्रा Nṛisut. 3 (bis).
Śiras. 6. न तस्मात्पूर्वं न परं तदस्ति
Śikhâ. 1. पूर्वास्य मात्रा पृथिव्यकारः
Yogat. 3. यः स्तन्यं पूर्वं पीत्वापि
Kaṭhaśru. 3. अग्निसंस्थितानि पूर्वाणि दारुपात्राणि
Sarvop. 4. पूर्वं व्यापकं चैतन्यम्
Vâsu. 3. पूर्वमभ्यस्य पुण्ड्रस्थम्
Mukti. 2. 69. मानसीर्वासनाः पूर्वम्
Gîtâ. 4. 15. पूर्वैरपि मुमुक्षुभिः
— पूर्वैः पूर्वतरं कृतम्
10. 6. महर्षयः सप्त पूर्वे

## पूर्वजन्मार्जित

Nyâsa. 5. पूर्वजन्मार्जितात्मनः

## पूर्वजाति

Garbha. 3. पूर्वजातीःस्मरति (so MSS.)

## पूर्वतर

Gîtâ. 4. 15. पूर्वैः पूर्वतरं कृतम्

## पूर्वदल

Haṁsa. 2. पूर्वदले पुण्ये मतिः

## पूर्वनिष्पन्न

Gauḍa. 4. 18. कतरत्पूर्वनिष्पन्नम्

## पूर्वपक्ष

Kaush. 1. 2. तेषां प्राणैः पूर्वपक्ष आप्यायते
Bṛih. 3. 1. 5. पूर्वपक्षापरपक्षाभ्याम् (bis).
— पूर्वपक्षापरपक्षयोः

## पूर्वप्रज्ञा

Bṛih. 4. 4. 2. तं विद्याकर्मणी समन्वारभेते पूर्वप्रज्ञा च

## पूर्वरूप

Tait. 1. 3. 1. पृथिवी पूर्वरूपम्
2. अग्निः पूर्वरूपम्
— आचार्यः पूर्वरूपम्
3. माता पूर्वरूपम्
4. अधरा हनुः पूर्वरूपम्

## पूर्ववत्

Kaṭhaśru. 1. तान् सर्वांश्च पूर्ववद्गृणीत्वा
Jâbâla. 4. पूर्ववदग्निमाघ्रापयेत्
Krish. 19. पूर्ववच्च महोदधौ

## पूर्वापर

Gauḍa. 4. 21. पूर्वापरापरिज्ञानमजातेः परिदीपकम्
Mukti. 2. 57. त्यक्तपूर्वापरविचारणम्

## पूर्वाभ्यास

Gîtâ. 6. 44. पूर्वाभ्यासेन तेनैव

## पूर्वामुख

Mahâ. 3. सो ऽध्यायत पूर्वामुखो भूत्वा

## पूर्वार्द्ध

Bṛih. 1. 1. 1. उद्यन्तु पूर्वार्द्धः

## पूर्वाह्न

Chhâ. 5. 11. 7. समित्पाणयः पूर्वाह्णे प्रतिचक्रमिरे

## पूर्वोक्त

Amṛita. 21. पश्चाद् ध्यायेत पूर्वोक्तम्

## पूर्वोत्तर

Mukti. 1. 41. पूर्वोत्तरेषु विहितः (?)

## पूर्व्य

Swet. 2. 5. युजे वां ब्रह्म पूर्व्यं नमोभिः
7. जुषेत ब्रह्म पूर्व्यम्

## पूषन्

Bṛih. 1. 4. 13. शौद्रं वर्णमसृजत पूषणमियं वै पूषा
5. 15. 1. तत्त्वं पूषन्नपावृणु Iśâ. 15; Maitri. 6. 35.
— पूषन्नेकर्षे . . व्यूह रश्मीन् Iśâ. 16.

Nṛip. 1. 1. स्वस्ति नः पूषा विश्ववेदाः Nṛisut. 1.

## पृतनाजित्

Mahânâr. 6. 6. पृतनाजितं सहमानम्

## पृथक्

Chhâ. 5. 11. 5. पृथगर्हाणि कारयाञ्चकार
5. 14. 1. तस्मात्त्वां पृथग्बलय आयन्ति पृथग्रथश्रेणयो ऽनुयन्ति
5. 18. 1. पृथगिवेममात्मानं वैश्वानरं विद्वांसः

Bṛih. 2. 4. 10. पृथग्धूमा विनिश्चरन्ति 4. 5. 11; Maitri. 6. 23 (omits वि)

Katha. 4 14. एवं धर्मान् पृथक् पश्यन्
6. 6. पृथगुत्पद्यमानानाम्

Swet. 1. 6. पृथगात्मानं प्रेरितारं च मत्वा

Praśna. 3. 4. इतरान् प्राणान् पृथक् पृथगेव सन्निधत्ते

Gauḍa. 1. 6. चेतोंऽशून् पुरुषः पृथक्
2. 30. पृथगेवेति लक्षितः
34. न पृथङ्नापृथक्किञ्चित् (MSS. न पृथत्त्वात्पृथ०)
4. 26. नार्थाभासस्ततः पृथक्
36. पृथगन्यस्य दर्शनात्

Gauḍa. 4. 64. न विद्यन्ते ततः पृथक् 66.
78. हेतुं पृथगनाप्नुवन्

Parama. 3. न पृथङ्नापृथक्

Mukti. 1. पृथक् शान्तिमनुब्रूहि

Gîtâ. 1. 18. शंखान्दध्मुः पृथक् पृथक्
5. 4. सांख्ययोगौ पृथक्
18. 1. त्यागस्य च . . पृथक्
14. विविधाश्च पृथक् चेष्टाः

## पृथक्त्व

Maitri. 6. 14. प्रमेयो ऽपि प्रमाणतां पृथक्त्वादुपैति

Gauḍa. 3. 14. जीवात्मनोः पृथक्त्वं यत्

Gîtâ. 9. 15. एकत्वेन पृथक्त्वेन
18. 21. पृथक्त्वेन तु यज्ज्ञानम्
29. पृथक्त्वेन धनञ्जय

## पृथग्भाव

Kaṭha. 6. 6. इन्द्रियाणां पृथग्भावं . . मत्वा

Gîtâ. 13. 30. यदा भूतपृथग्भावम्

## पृथग्लक्षण

Maitri. 6. 22. तं पृथग्लक्षणमतीत्य

## पृथग्वर्त्मन्

Chhâ. 5. 14. 1. एष वै पृथग्वर्त्मात्मा
5. 18. 2. प्राणः पृथग्वर्त्मात्मा

## पृथग्वाद

Gauḍa. 4. 94. भेदनिम्नाः पृथग्वादाः

## पृथग्विध

Gauḍa. 2. 16. ततो भावान्पृथग्विधान्

Gîtâ. 10. 5. मत्त एव पृथग्विधाः
18. 14. करणं च पृथग्विधम्
21. नानाभावान्पृथग्विधान्

## पृथिवी

Ait. 1. 2. पृथिवी मरः
5. 3. पृथिवी वायुराकाश आपो ज्योतींषि

Kaush. 3. 1. अतृणम्..पृथिव्यां कालकांजान्

Kena. 18. इदं सर्वं दहेयं यदिदं पृथिव्यामिति

22. इदं सर्वमाददीयं यदिदं पृथिव्यामिति

Chhâ. 1. 1. 2. एषां भूतानां पृथिवी रसः पृथिव्या आपः Brih.6.4.1.

1. 3. 7. पृथिवी थम्

2. 2. 1. पृथिवी हिंकारः 2. 17. 1.

2. पृथिवी निधनम्

3. 12. 2. या वै सा गायत्रीयं वाव सा येयं पृथिवी

3. या वै सा पृथिवीयं वाव सा यदिदमस्मिन्पुरुषे शरीरम्

3. 14. 3. ज्यायान् पृथिव्याः

3. 15. 5. पृथिवीं प्रपद्ये

3. 19. 2. यद्रजतं सेयं पृथिवी

4. 6. 3. पृथिवी कलान्तरिक्षं कला

4. 11. 1. पृथिव्यग्निरन्नमादित्यः

4. 17. 1. अग्निं पृथिव्याः

5. 6. 1. पृथिवी वाव..अग्निः

5. 17. 1. पृथिवीमेव भगवो राजन्

5. 18. 2. पृथिव्येव पादौ

5. 21. 2. पृथिवी तृप्यति पृथिव्यां तृप्यन्त्यां यत्किञ्च पृथिवी चाग्निश्चाधितिष्ठतस्तत्तृप्यति

7. 2. 1. दिवं च पृथिवीं च 7. 7. 1.

7. 6. 1. ध्यायतीव पृथिवी

7. 8. 1. बलेन वै पृथिवी तिष्ठति

7. 10. 1. येयं पृथिवी यदन्तरिक्षम्

Brih. 1. 1. 1. पृथिवी पाजस्यम्

1. 2. 2. सा पृथिव्यभवत्

1. 5. 11. तस्यै वाचः पृथिवी शरीरम्

— यावत्येव वाक्तावती पृथिवी

18. पृथिव्यै चैनमग्नेश्च

2. 2. 2. अधरयैनं वर्त्तन्या पृथिव्यन्वायत्ता

Brih. 2. 4. 2. सर्वा पृथिवी वित्तेन पूर्णा 4. 5. 3.

2. 5. 1. पृथिवी सर्वेषां भूतानां मध्वस्यै पृथिव्यै सर्वाणि भूतानि मधु

— पृथिव्यां तेजोमयः..पुरुषः

3. 2. 13. पृथिवीं शरीरं (अप्येति)

3. 3. 2. तं समन्तं पृथिवी..पर्येति तां समन्तं पृथिवीं..समुद्रः पर्येति

3. 7. 3. यः पृथिव्यां तिष्ठन्पृथिव्या अन्तरो यं पृथिवी न वेद यस्य पृथिवी शरीरं यः पृथिवीमन्तरो यमयति

3. 8. 3. यदवाक् पृथिव्याः 4, 6. 7.

3. 9. 3. अग्निश्च पृथिवी च वायुश्च 7.

10. पृथिव्येव यस्यायतनम्

6. 2. 11. पृथिव्येव सामित्

16. वृष्टेः पृथिवीं ते पृथिवीं प्राप्यान्नं भवन्ति

6. 4. 5. यन्मे ऽद्य रेतः पृथिवीमस्कान्त्सीत्

20. द्यौरहं पृथिवी त्वम्

22. यथाग्निगर्भा पृथिवी

Tait. 1. 3. 1. पृथिवी पूर्वरूपम्

1. 7. 1. पृथिव्यन्तरिक्षं द्यौः

2. 1. 1. अद्भ्यः पृथिवी पृथिव्या ओषधयः

2. 2. 1. याः काश्च पृथिवीं श्रिताः

— पृथिवी पुच्छं प्रतिष्ठा

2. 8. 1. तस्येयं पृथिवी वित्तस्य पूर्णा

3. 9. 1. पृथिवी वा अन्नं..पृथिव्यामाकाशः..आकाशे पृथिवी

Swet. 2. 1. पृथिव्या अध्याभरत्

12. पृथ्व्याप्यतेजोनिलखे 6. 2 (खानि)

Maitri. 1. 4. निमज्जनं पृथिव्याः
5. 1. त्वं यमस्त्वं पृथिवी
6. 4. पृथिवी गार्हपत्यः
Mund. I. 1. 7. यथा पृथिव्यामोषधयः सम्भवन्ति
2. 1. 3. पृथिवी विश्वस्य धारिणी Kaivalya. 15 ; Nâr. 1.
4. अस्य पद्भ्यां पृथिवी
5. ओषधयः पृथिव्याम्
2. 2. 5. यस्मिन्द्यौः पृथिवी चान्तरिक्षमोतम्
Mahânâr. 5. 7. दिवं च पृथिवीं चान्तरिक्षम्
8. यत्पृथिव्यां रजः स्वमान्तरिक्षे
7. 1. पृथिव्यै स्वाहा 2.
3. भूरग्नये च पृथिव्यै च
14. 2. आपः पुनन्तु पृथिवीं पृथिवी पूता पुनातु माम् Prâṇâg. 1.
22. 1. गार्हपत्यमृक् पृथिवी रथन्तरम्
23. 1. येन सर्वमिदं प्रोतं पृथिवी चान्तरिक्षं च
Praśna. 2. 2. वायुरग्निरापः पृथिवी
5. वायुरेष पृथिवी रयिर्देवः
3. 8. पृथिव्यां या देवता
4. 8. पृथिवी च पृथिवीमात्रा च
6. 4. खं वायुर्ज्योतिरापः पृथिवी Kaivalya. 15.
Gauḍa. 3. 12. पृथिव्यामुदरे चैव
Nṛip. 2. 1. प्रणवस्य या पूर्वा मात्रा पृथिव्यकारः Nṛisut. 3.
Brahmav. 5. पृथिवी ब्रह्म एव च
Śiras. 2. यो वै रुद्रः . . या च पृथिवी
6. पृथिवी द्विधा त्रिधर्ता धारिता
Śikhâ. 1. पूर्वास्य मात्रा पृथिव्यकारः
Garbha. 1. पृथिव्यापस्तेजोवायुराकाशम्
— का पृथिवी का आपः
— तत्र यत्कठिनं सा पृथिवी
— तत्र पृथिवी धारणे
Nîla. 1. दिवितः पृथिवीमवः
18. ये केच पृथिवीमनु
Nyâsa. 2. पृथिव्यां नाश्रुपातकाः
4. अद्भ्यः पृथिवी पृथिव्या इत्येषां भूतानाम्
Gopi. 4. पञ्चभूतेषु गन्धवतीयं पृथिव्यासीत्
— पृथिव्याश्च वैभवाद्वर्णभेदाः
Râmap. 86. पृथिव्यब्जे स्वासनाधः प्रकल्प्य
Gîtâ. 1. 19. नभश्च पृथिवीं चैव
7. 9. पुण्यो गन्धः पृथिव्याम्
18. 40. न तदस्ति पृथिव्याम्

## पृथिवीक्षित्

Chhâ. 2. 24. 5. नमो ऽग्नये पृथिवीक्षिते Maitri. 6. 35.

## पृथिवीपति

Gîtâ. 1. 18. सर्वशः पृथिवीपते

## पृथिवीमय

Bṛih. 4. 4. 5. पृथिवीमय आपोमयः

## पृथिवीमात्रा

Praśna. 4. 8. पृथिवी च पृथिवीमात्रा च

## पृथिवीलोक

Bṛih. 3. 1. 10. पृथिवीलोकमेव पुरोऽनुवाक्यया जयति

## पृथिवीश्रित

Maitri. 6. 11. याः काश्चित् पृथिवीश्रिताः (*cf.* Tait. 2. 2. 1).

## पृथु

Mahânâr. 6. 4. पृथ्व पृथ्वी बहुला न उर्वी

Garbha. 1. आकाशमवकाशप्रदाने पृथुस्तु (so one MS. and Dîpikâ).

## पृथुदुक

Bṛih. 6. 4. 21. गर्भं धेहि पृथुदुके

## पृषदाज्य

Bṛih. 6. 4. 24. कंसे पृषदाज्यं सन्नीय पृषदाज्यस्योपघातं जुहोति

## पृष्ठ

Chhâ. 3. 13. 7. विश्वतः पृष्ठेषु सर्वतःपृष्ठेषु
Bṛih. 1. 1. 1. द्यौः पृष्ठम् 1. 2. 3.
Tait. 1. 10. 1. कीर्त्तिः पृष्ठं गिरेरिव
Maitri. 6. 33. शिरःपक्षसीपुच्छपृष्ठवान् (ter).
Muṇḍ.1. 2. 10. नाकस्य पृष्ठे Mahânâr. 1.1.
Mahânâr. 5. 3. नाकस्य पृष्ठमारुह्य

## पृष्ठतस्

Bṛih. 1. 5. 3. पृष्ठत उपस्पृष्टो मनसा विजानाति
Gîtâ. 11. 40. नमः पुरस्तादथ पृष्ठतस्ते

## पृष्ठवंश

Garbha. 3. पञ्चमे पृष्ठवंशः (all the MSS. have पृष्टिवंशः)

## पॄ

Kaush. 4. 2. आकाशे पूर्णम्
8. पूर्णमप्रवृत्ति ब्रह्मेति वा अहमेतमुपासे..एतमेवमुपास्ते पूर्यते प्रजया
Chhâ. 3. 11. 6. धनस्य पूर्णाम्
3. 12. 9. तदेतत्पूर्णमप्रवर्त्ति पूर्णामप्रवर्त्तिनीं श्रियं लभते य एवं वेद
Bṛih. 1. 4. 3. तस्मादयमाकाशः स्त्रिया पूर्यते
Bṛih. 2. 1. 5. पूर्णमप्रवर्त्तीति..एतमुपासे — एवमुपास्ते पूर्यते प्रजया
2. 4. 2. मर्त्या पृथिवी वित्तेन पूर्णा 4. 5. 3.
4. 3. 20. शुक्लस्य नीलस्य पिङ्गलस्य हरितस्य लोहितस्य पूर्णाः
5. 1. 1. पूर्णमदः पूर्णमिदं पूर्णात्पूर्णमुदच्यते &c., Mukti. 1.
5. 14. 6. य इमांस्त्रींलोकान्पूर्णान्प्रतिगृह्णीयात्
6. 3. 4. ज्वलदसि पूर्णमसि
6. 4. 19. उदपात्रं पूरयित्वा
Tait. 2. 2. 1. तेनैष पूर्णः 2. 3. 1; 2. 4. 1; 2. 5. 1.
2. 8. 1. तस्येयं पृथिवी वित्तस्य पूर्णा
Swet. 3. 9. तेनेदं पूर्णं पुरुषेण सर्वम् Mahânâr. 10. 4.
Maitri. 1. 1. स पूर्णः खलु..संपद्यते यज्ञः
6. 26. पूरयतीमाँल्लोकान्
Nṛip. 5. 10. यतीनां तु शतं पूर्णम्
Kshur. 4. पूरयेत्सर्वमात्मानम्
11. तां नाडीं पूरयन्यतः
Yogat. 3. यस्मिन् जाते भगे पूर्णे (so all MSS.).
12. वायुः पूरत पूरत (so Nârâyaṇa; but 4 MSS. read पूरतपूरतः one पूरकपूरकः and one पूरतः पूरतः)
Mukti. 1. 36. अव्यक्तैकाक्षरं पूर्णा
1. पूर्णमद इति शान्तिः
2. 52. तावत्पूर्णां समावस्थाम्

## पेशस्

Bṛih. 4. 4. 4. पेशसो मात्रामुपादाय

## पेशस्कारिन्

Bṛih. 4. 4. 4. यथा पेशस्कारी पेशसो मात्रामुपादाय

